शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाश्रितौ ।
शनैरधोमुखा विद्धौ सोऽवहित्थ इति स्मृतः ॥ சு-146.

*மாதிரிப்பிரயோகம்:—அடங்காத ஆவலைக்காட்ட:—*

उत्कण्ठिते .... .... சு. 147.

13. *வர்த்தமானம்* (वर्धमान: *விருத்தியடைதல்*) *ஒருகையை முகுள ஹஸ்த (ஒற்றைக்கை நெ. 22)மாக வைத்துக்கொண்டு கபித்த (ஒற்றைக்கை நெ. 9) முத்திரையுடன் கூடிய மற்றொரு கைவிரல்களால் அதை வளைத்துப் பிடித்தால் அதற்கு வர்த்தமானம் என்று பெயர்:—*

मुकुलस्तु यदा हस्तः कपित्थ परिवेष्टितः ।
वर्धमानस्स विज्ञेयः कर्मचास्य निबोधत ॥ சு-148.

*மாதிரிப்பிரயோகம்:—மணமகளின் கையை மணமகன் பிடிப்பதைக்காட்ட:—* संग्रहपरिग्रहौ சு. 149.

*இதில் மற்றொரு வகை—இரண்டு கைகளிலும் ஹம்ஸபக்ஷ (ஒற்றைக்கை நெ. 20) முத்திரையுடன், உள்ளங்கை மறைமுகமாக இருக்குமாறு வைக்கப்பட்டால் அதற்கும் வர்த்தமானம் என்று பெயர்.*

विज्ञेयो वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ॥ சு-150.

*மாதிரிப்பிரயோகம்—ஜன்னல் முதலியவைகளைத் திறப்பதைக் காட்ட:—*

जालवातायनादीनां प्रयोक्तव्यो विघाटने ॥ சு-150.

3. *ஹஸ்தகரணம் நான்கு* (हस्तकरणम् *கைகளைத் திருகிச் சுழற்றல்*):—

1. *ஆவேஷ்டிதம்* (आवेष्टित *நாலு பக்கங்களிலும் வளைக்கப்பட்டது*) *ஆள்காட்டிவிரல் முன்னே செல்லும்படி விரல்களைச் சுழற்றி உட்புறம் கொண்டுவருதல்:—*

आवेष्यन्ते यदाऽङ्गुल्यः तर्जन्याद्या यथा क्रमम् ।
अभ्यन्तरेण करणं तदावेष्टितमुच्यते ॥ சு-200.

2. *பரிவேஷ்டிதம் அல்லது உத்வேஷ்டிதம்* (परिवेष्टित *சுற்றி வளைக்கப்பட்டது.* उद्वेष्टित *உயர வளைக்கப்பட்டது*) *ஆள்காட்டி விரல் முன்னே செல்லும்படி கைவிரல்களை மேலே சுழற்றி வெளியே கொண்டுபோதல்:—*

उद्वेष्ट्यन्ते यदाऽङ्गुलयः तर्जन्याद्याबहिर्मुखाः ।
क्रमशः करणं विप्राः तदुद्वेष्टितमुच्यते ॥ சு-201.

3. ஆவர்த்திதம் (आवर्तितम् சுழிக்கப்பட்டது), அல்லது, வ்யா வர்த்திதம் (व्यावर्तितम् நன்ருகச் சுழிக்கப்பட்டது) சுண்டுவிரல் முன்னே செல்லும்படி விரல்களைச் சுழற்றி உள் புறம் கொண்டுவருதல்:—

आवर्तन्ते कनिष्ठाद्या ह्यङ्गुलयोऽभ्यन्तरेणतु ।
यत्तु क्रमेण करणं तद्व्या वर्तितमुच्यते ॥ சு-202.

4. பரிவர்த்திதம் (परिवर्तितम् திருப்பிச்சுழற்றப்பட்டது) சுண்டு விரல் முன்னே செல்லும்படி விரல்களை மேலே சுழற்றி வெளிப்புறம் கொண்டுபோதல்:—

उद्वर्तन्ते कनिष्ठाद्या बाह्यशः क्रमशो यदा ।
अङ्गुल्यः करणं विप्राः तदुक्तं परिवर्तितम् ॥ சு-205.

4. பாதங்கள் ஆறுவகை:—

1. உத்கட்டிதம் (उद्घट्टितम् தூக்கி அழுந்தவைப்பது) முன்னங் காலால் நின்று குதிகாலைப் பூமியில் அழுந்தவைப்பது:—

स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते ।
यस्य पादस्य करणे भवेदुद्घट्टितस्तुसः ॥ அ-10 சு-42.

2. ஸமம் (समम् ஸ்வபாவமான நிலை) ஸ்வபாவமாக ஒழுங்காக நிற்பது:—

स्वभावरचिते भूमौ समस्थानेच यो भवेत् ।
समः पादस्य विज्ञेयः स्वभावाभिनयाश्रयः ॥ அ-10 சு-44.

3. அக்ரதல ஸஞ்சரம் (अग्रतल सञ्चरः முன்னங்காலால் நடப்பது) குதிகால் தூக்கப்பட்டு, பெருவிரலும் மற்றவிரல்களும் வளைக்கப் பட்டு இருக்கும் பாதத்தின் நிலைக்கு அக்ரதல ஸஞ்சரம் என்று பெயர்:—

उत्क्षिप्तातुभवेत्पार्ष्णिः अञ्चितोऽङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चाञ्चितास्सर्वाः पादोऽग्रतल सञ्चरः ॥ சு-46.

4. அஞ்சிதம் (अञ्चितम् வளைக்கப்பட்டது) குதிகால் வளைந்து பூமியில் வைக்கப்பட்டு, முன்னங்கால் தூக்கப்பட்டு விரல்களும் வளைக்கப்பட்டால் அதற்கு 'அஞ்சிதம்' என்று பெயர்:—

पार्ष्णिर्यस्याश्चिता भूमौ ऊर्ध्वमग्रतलं तथा ।
अङ्गुल्यश्चाश्चितास्सर्वाः सपादस्त्वश्चितस्स्मृतः ॥ சு-48.

5. குஞ்சிதம் (कुञ्चितम् குறுக்கப்பட்டது) குதிகால் தூக்கப்பட்டு உள்ளங்காலின் நடுப்புறமும் குறுக்கப்பட்டால், அதற்குக் குஞ்சிதம் என்று பெயர் :—

उत्क्षिप्तायस्य पार्ष्णिःस्यात् अङ्गुल्यः कुञ्चितास्तथा ।
तथा कुञ्चितमध्यश्च सपादः कुञ्चितः स्मृतः ॥ சு-50.

6. ஸூசீபாதம் (सूचीपादः ஊசிமுனைபோன்று நீண்டபாதம்) இடதுகாலை இயற்கையான நிலையில் வைத்து வலது குதிகாலைத்தூக்கிப் பெருவிரலின் நுனியால் நின்றால் அதற்கு ஸூசீபாதம் என்று பெயர்.

उत्क्षिप्तातु भवेत्पार्ष्णिः अङ्गुष्ठाग्रेण संस्थिता ।
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ॥ சு-51.



॥ श्रीः ॥

नृत्यलक्षणसहितं

# ॥ गीतगोविन्दमहाकाव्यम् ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीसरस्वत्यै नमः ॥

मेघैर्मेदुरमंबरं वनभुवः श्यामास्तमालद्रुमैः
नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुंजद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥ १ ॥

टीका

मेघैर्मेदुरं—तिर्यक्प्रसारितशनैः ऊर्ध्वमिलिताधस्तलपताकाभ्याम् ।

अंबरं—स्वस्तिकीकृतोर्ध्वविस्तारित पताकाभ्याम् ।

वनभुवः—चलदूर्ध्वगत त्रिपताकाभ्यां विच्युतस्वस्तिकेन, पुनस्तल-दर्शितपताकेन ।

श्यामास्तमालद्रुमैः—ऊर्ध्वविस्तारित चलत्संदेशेन, चलदूर्ध्वगत त्रिपताकाभ्याम् ।

नक्तं—स्कंधानतेन शिरसा मुकुलदृष्ट्या ।

भीरुः—विधुतेन शिरसा त्रस्तदृष्ट्याच ।

अयं—पुरस्तल पुरोदेशदर्शित पताकेन ।

त्वं—पुरः प्रसारितोर्ध्वतलपताकेन ।

एव—ऊर्ध्वतलमृगशीर्षेण ।

तत्—आवर्तनेन ।

इमं—ऊर्ध्वाधस्तल चतुस्तालान्तरितार्धचन्द्राभ्याम् ।

राधे—शिरोदेशादाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा ।

गृहं—उर्ध्वमिलिताग्रमृगशीर्षाभ्याम् ।

प्रापय—वामपार्श्वात्तिर्यग्गतोर्ध्वतल पताकेन । अथवा वामदेशात्तिर्य-ग्गतोर्ध्वमृगशीर्षेण ।

इत्थं—अधोमुखदक्षमृगशीर्षेण ।

नंद—वामो गोमुखेन दक्षिण ऊर्ध्वमुखसूचिमुखेन ।

निदेशतः—मुखगतेन हंसास्येन ।

चलितयोः—हस्तधृत कृष्णकरकनिष्ठिकया राधाविलासेन । विलासो गमनादिस्यात् चेष्टाश्लिष्टांगया कृता ।

प्रति—प्रत्यग्दर्शितसूचीमुखेन ।

अध्व—वामदेशात्तिर्यग्गतोर्ध्वतलमृगशीर्षेण । अथवा अधोंगुलि पुरःप्रसारित चलत्रिपताकेन ।

कुंज—चलल्लताकरोर्ध्वसमानीत मिलितमुखमृगशीर्षाभ्याम् ।

द्रुमं—चलदूर्ध्वगतत्रिपताकाभ्याम् ।

राधा—शिरोदेशादाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा ।

माधव—वैष्णवस्थानकेन वंशधारणमुद्रया ।

जयन्ति—उद्वृत्तहस्तकेन ।

यमुना—भ्रामितोर्ध्वसूचीमुखचलदधःसमानीत त्रिपताकेन । तेनैव पुरःप्रसारितेन ।

कूले—चलत्पुरःप्रसारित त्रिपताकाभ्यां अथवा उत्संगेन ।

रहः—ऊर्ध्वमुख सूचीमुखेन ।

केलयः—मिलितांगुलितलत्रिपताकाभ्यां अथवा उत्संगेन ॥ १ ॥

वाग्देवता चरित चित्रित चित्त सद्मा
पद्मावती चरण चारण चक्रवर्ती ।
श्रीवासुदेव रतिकेलि कथासमेतं
एतं करोति जयदेवकविः प्रबन्धम् ॥ २ ॥

## टीका

वाग्देवता—अधरात्पुरोगतहंसास्येन शिरस्थांजलिना च ।

चरित—विस्तारितोर्ध्वतल पताकेन ।

चित्रित—लोलित संदंशेन ।

चित्त—हृद्गतसंदंशेन ।

सद्मा—ऊर्ध्वमिलित मृगशीर्षाभ्याम् ।

पद्मावती—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

चरण—चरणदर्शित पताकेन ।

चारण—हंसगत्या ।

चक्रवर्ती—भ्रामितोर्ध्वमुख सूचीमुखेन ।

श्रीवासुदेव—वैष्णवस्थानकेन वंशधारणमुद्रया ।

रतिकेलि—उत्संगेनाधरसमीपे ऊर्ध्वाधोमुखमिलितमुकुलाभ्याम् ।

कथा—अधरात्पुरोगत हंसास्येन ।

समेतं—मिलित सूचीमुखाभ्याम् ।

एतं—अधोंगुलि पुरस्तलपताकेन।

करोति—अधोमुखहंसास्याभ्याम् ।

जयदेवकविः—ललाटस्थांजलिना ।

प्रबंधं—अधरात्पुरोगत हंसास्येन ॥ २ ॥

यदि हरिस्मरणे सरसं मनो यदि विलासकथासु कुतूहलम् ।
मधुरकोमलकान्तपदावलिं शृणु तदा जयदेव सरस्वतीम् ॥ ३ ॥

यदि—व्यावर्तनेन ।

हरि—वैष्णवस्थानकेन वंशधारणमुद्रया ।

स्मरणे—हृच्चालित संदंशेन ।

सरसं—हृत्परिवर्तित चतुरेण ।

मनः—हृद्गत संदंशेन ।

यदि—व्यावर्तनेन ।

विलासकथासु—निहंचितेन शिरसा समपादचार्या ।

कुतूहलं—हृद्गत विकसित मुकुलेन लोलितालपल्लवेन च ।

मधुर—कर्णगत हंसास्येन ॥

कोमल—लोलितांगुष्ठ हंसास्येन ।

कान्त—लोलित संदंशेन ।

पदावलिं—अधरात्पुरोगत हंसास्येन ।

शृणु—कर्णगतसूचीमुखेन ।

तदा—व्यावर्तिततिर्यगूर्ध्वदर्शित सूचीमुखेन .

जयदेव—ललाटस्थांजलिना ।

सरस्वतीं—अधरात्पुरोगत हंसास्येन ॥ ३ ॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ ४ ॥

वेदान्—विरलांगुलि पुरस्तल निकुंचकेन ।

उद्धरते—शनैरूर्ध्वगतालपल्लवेन।

जगत्—ऊर्ध्वतलविस्तारित पताकाभ्याम्।

निवहते-स्कंधगतालपल्लवेन ऊर्ध्वस्थितोर्ध्वतलपताकाभ्याम्।

भूगोलं—पुरस्तल भूदर्शितपताकेन ऊर्ध्वमुख कपोतेन च।

उद्विभ्रते—ऊर्ध्वस्थितोर्ध्वतल पताकाभ्याम्।

दैत्यं—मुखसमीपेमिलिततलोर्णनाभाभ्याम्।

दारयते—रेचित हस्तकेन।

बलिं-ऊर्ध्वमुखभ्रामित सूचीमुखेन गजदन्तबाह्वास्फालित सर्पशीर्षेण।

छलयते—परिवर्तितालपल्लवेन।

क्षत्र—प्रत्यालीढस्थानकेन पुरःप्रसारितमुष्ट्या कर्णाकृष्टखटकामुखेन।

क्षयं—वामस्कन्धदेशात्तिर्यगधोगताधस्तलपताकेन।

कुर्वते-अधोमुख हंसास्येन।

पौलस्त्यं-हनोरधावर्तितालपल्लवेन पुरस्तल विरलांगुलि पताकाभ्याम्।

जयते—उद्वेष्टितालपल्लवेन।

हलंकलयते—स्कंधस्थितारालेन।

कारुण्यं—करुणया दृष्ट्या हृत्स्थितहंसपक्षेन ः

आतन्वते—विस्तारितोर्ध्वतलपताकाभ्याम्।

म्लेच्छान्—कर्णाधोदर्शितसंदंशेन पुरस्तले लोलितपताकेन।

मूर्छयते—अंचितेन शिरसा दोलहस्तकेन।

दशाकृति—पुरस्तल विरलांगुलि पताकाभ्याम्। शनैरंगदर्शित संदंशाभ्याम् च।

कृते--अधोमुख हंसास्येन।

कृष्णाय—वैष्णवस्थानकेन वंशधारणमुद्रया।

तुभ्यं-नमःपुरःप्रसारितपताकेन ललाटस्थांजलिनावधूतेन शिरसा॥

# अष्टपदी १

प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्र चरित्रमखेदम् ।
केशव धृतमीनशरीर जय जगदीशहरे ॥ १ ॥

प्रलय – पताकोपरिमर्दित पताकेन गगनदृष्ट्या च ।
पयोधिजले—अधः स्वस्तिकीकृत विच्युतोर्ध्वतल पताकाभ्याम्
धृतवानसि– अधोदेशादुद्धृतमुष्टिना ।
वेदं—पुरस्तल निकुंचकेन ।
विहित—शनैरधस्तलीकृतपताकेन ।
वहित्र– चालितांगुष्ठकर प्रसारित पुष्पपुटेन ।
चरित्रं—प्रसारितोर्ध्वतल पताकेन ।
अखेदं—हृद्गतपताकेन मुकुलया दृष्ट्या च ।
केशव—केशबन्धेन ।
धृत—आवर्तनेन कृतमुष्टिना ।
मीनशरीर—मकरहस्तकेन ।
जय– उद्वृत्त हस्तकेन ।
जगदीश—ललाटस्थांजलिना ।
हरे—वैष्णवस्थानकेन ॥ १ ॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ।
धरणिधरणकिणचक्रगरिष्ठे ।
केशव धृतकच्छपरूप जय० ॥ २ ॥

क्षितिः—अधोंगुलि पुरोदेशदर्शित पताकेन ।
अति–आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।
विपुलतरे–विच्युत विस्तारित स्वस्तिकेन ।

तव-पुरः प्रसारितोर्ध्वतलपताकेन ।
तिष्ठति पृष्ठे-अधस्तलीकृत शुकतुंडोपरिमुष्टिना ।
धरणि-अधोंगुलिपुरोदेश दर्शितपताकेन ।
धरण-ऊर्ध्वतलोर्ध्वस्थित पताकाभ्याम् ।
किण-बद्धमुष्टिना ।
चक्र-भ्रामितसूचीमुखेन ।
गरिष्ठे-आवेष्टित किंचिदूर्ध्वगत पताकाभ्याम् ।
केशव धृत-पूर्ववत् ।
कच्छप-शुकतुंडेन ॥२॥

वसति दशनशिखरे धरणी तव लग्ना ।
शशिनिकलंककलेवनिमग्ना ।
केशवधृत सूकर रूप जय० ॥ ३ ॥

वसति—शनैरधस्तलीकृत पताकेन ।
दशनशिखरे—मुखलग्न कनिष्ठिका शिखरेण ।
धरणी—अधोंगुलिपुरोदेश दर्शित पुरस्तलपताकेन ।
तव—पुरःप्रसारितोर्ध्वतलपताकेन ।
लग्ना—तिर्यङ्मिलिताग्रतलसूचीमुखाभ्याम् ।
शशिनि—अर्धचन्द्रेण ।
कलंक—मृगशीर्षेण ।
कला—सूचीमुखेन ।
इव—आवर्तनेन ।
निमग्ना—अधोमुखाधोगतमुकुलेन ।
केशवेत्यादि पू० ।
सूकररूप—ताम्रचूडाभ्याम् । अथवा । मुखलग्नकनिष्ठिकाशिखरेणा

गदर्शितसंदंशाभ्याम् । अथवा । सूकरिमुद्रया ।

जय०—पूर्व० ॥ ३ ॥

तव करकमलवरे नखमद्भुतशृंगं
दलित हिरण्यकशिपुतनु भृङ्गम् ।
केशव धृत नरहरिरूप जय० ॥ ४ ॥

तव–पुरः प्रसारितोर्ध्वतलपताकेन ।

कर–दर्शितपताकेन ।

कमल–कमलवर्तनया ।

वरे–शनैरूर्ध्वगतालपल्लवेन अथवा आवर्तित किंचिदूर्ध्वगत पताकेन।

नखं—अंगुलि नखोपरि वलितांगुष्ठेन ।

अद्भुत–अद्भुतदृष्टया ।

शृंगं–ऊर्ध्वस्थितमृगशीर्षेण ।

दलित–वीरदृष्टया रेचितहस्तकेन ।

हिरण्यकशिपु–मुखसमीपे ऊर्ध्वाधस्तलोर्णनाभाभ्याम् ।

तनु–अंगदर्शित हंसपक्षेन ।

शृंगं-भ्रमरहस्तकेन ।

केशवधृत–पूर्ववत् ।

नर–स्कन्धमूलदर्शितालपल्लवेन ।

हरि–स्वस्तिकीकृत पुरस्तलोर्णनाभाभ्याम् ।

रूप–पूर्ववत् ॥ ४ ॥

छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजानितजनपावन ।
केशव धृत वामनरूप जय० ॥ ५ ॥

छलयसि—उद्वेष्टित पताकेन ।

विक्रमणे—विष्णुक्रान्त करणेन ।

बलिं—ऊर्ध्वभ्रामित सूचीमुखेन । बाह्वास्फालित सर्पशीर्षेण च ।

अद्भुत—अद्भुत दृष्ट्या ।

वामन—तालान्तरितोर्ध्वाधस्तलार्धचन्द्राभ्याम् ।

पद—चरण दर्शित पताकेन ।

नख—नखदर्शितांगुष्ठेन ।.

नीर—ऊर्ध्वस्थित शिथिलांगुल्यधस्तलपताकाभ्याम् । अथवा मकर हस्तकेन ।

जनित—आवर्तित किंचिदूर्ध्वगत पताकेन ।

जन—विस्तारितोर्ध्वतलपताकाभ्याम् ।

पावन—ऊर्ध्वगस्थलालपल्लवेन । अथवा ललाटस्थांजलिना ।

केशवेत्यादि पूर्ववत् ॥ ५ ॥

क्षत्रिय रुधिरमये जगदपगतपापं
स्नपयसि पयसि शमित भवतापम् ।
केशव धृतभृगुपतिरूप जय ॥ ६ ॥

क्षत्रिय–प्रत्यालीढस्थानकेन वामप्रसारितमुष्ट्या कर्णाकृष्टखटकामुखेन वीरदृष्ट्या च ।

रुधिर—स्कंधदेशात्तिर्यग्गताधस्तलपताकेन कन्ठदेशाच्चलदधोगत त्रिपताकेन च ।

मये–अधस्तलमिलित पुरोलोलित पताकाभ्याम् ।

जगत्–विस्तारितोर्ध्वतलपताकेन ।

अपगत–उद्वेष्टितपताकेन ।

पापं–विधुतेन शिरसा विश्लिष्टांगुलि चलत्पताकाभ्याम् च ।

स्नपयासि पयसि–स्नानरीत्यासर्पशीर्षाभ्याम् ।

शमित-शनैरधस्तलीकृत पताकेन ।

भव-शरीरदर्शितोर्ध्वगत सन्दंशाभ्याम् ।

तापं-विधुतेन शिरसा विश्लिष्टांगुलि चलत्पताकाभ्याम् । अभितस्तया
दृष्ट्या च ।

केशवेत्यादि-पूर्ववत् ॥ ६ ॥

वितरसि दिक्षुरणे दिक्पति कमनीयं
दशमुखमौलिबलिं रमणीयम् ।
केशव धृत रामशरीर जय० ॥ ७ ॥

वितरसि—अधोमुखमुकुलेन ।

दिक्षु—दिग्दर्शित सूचीमुखेन ।

रणे—प्रत्यालीढस्थानक वामप्रसारितमुष्टि दक्षिणाकृष्टखटकामुखेन ।

दिक्पति—दिग्दर्शित सूचीमुखेन मुष्टि शिखराभ्याम् ।

कमनीयं—लोलित सन्दंशेन ।

दशमुख-हनोरधोवर्तितालपल्लवेन विश्लिष्टांगुलि पुरस्तलपताकाभ्यां च ।

मौलि—किंचिच्छिरोलग्न पुरस्तल त्रिपताकाभ्याम् ।

बलिं—प्रतिदिक् अधोमुख पद्मकोशेन ।

रमणीयं—लोलितसन्दंशेन ।

केशव-पूर्व०

रामशरीर—अवधूतेन शिरसा ललाटस्थांजलिना ॥ ७ ॥

वहसिवपुषि विशदे वसनं जलदाभं
हलहति भीत मिलितयमुनाभम् ।
केशव धृतहलधररूप जय० ॥ ८ ॥

वहसि-अङ्कसमीपाधस्तलपताकाभ्याम् ।

वपुषि–अङ्गदर्शितहंसपक्षेण ।

विशदे–लोलितसन्दंशेन ।

वसनं–पार्श्वदेशात्पुरः समानीत खटकामुखाभ्याम् ।

जलदाभं–तिर्यक्प्रसारित शनैरूर्ध्वानीताधस्तल पताकाभ्याम् मिलित
सूचीमुखाभ्याम् च ।

हल–ताम्रचूडेन ।

हति–अधस्तलीकृत ताम्रचूडेन ।

भीत–विधुतेन शिरसा कातरया दृष्ट्या च ।

मिलित–मिलितसूचीमुखाभ्याम् ।

यमुना–उर्ध्वमुखभ्रामित सूचीमुखाच्चलदधः समानीत त्रिपताकेन
चलत्पुरः प्रसारितेन तेनैव ।

आभं–लोलितालपल्लवेन ।

केशव–पूर्ववत् ।

हलधररूप–स्कंधस्थितारालेन ॥ ८ ॥

निन्दसियज्ञविधेरहह श्रुतिजातम् ।
सदयहृदयदर्शित पशुघातम् ।
केशवधृत बुद्धशरीर जयगदीशहरे ॥ ९ ॥

निन्दसि–अधराद्विक्षिप्तसंदंशेन ।

यज्ञविधेः–दर्शित मृगशीर्षेण पुरःकिंचित्क्षिप्त सिंहमुखेन ।

अहह–धुतशिरसा ।

श्रुति–निकुंचकेन ।

जातं–आवर्तितेन कृतमुष्टया ।

सदय–हृत्समीपे शनैः अधस्तलीकृत पताकेन करुणया दृष्ट्या ।

हृदय—हृद्गत सन्दंशेन ।
दर्शित—अपांगावर्तित त्रिपताकेन तिर्यगवलोकनेन ।
पशु—मृगशीर्षेण ।
घातं—स्कंधदेशात्तिर्यग्गताधस्तलपताकेन ।
केशव—पूर्ववत् ।
बुद्धशरीर—स्तब्धशिरसा ॥ ९ ॥

म्लेच्छनिवह निधने कलयसि करवाल
धूमकेतुमिव कमपि करालम् ।
केशव धृत कल्कि शरीर जय जगदीश हरे ॥ १० ॥

म्लेच्छ—कर्णदर्शितसंदंशेन । पुरस्तललोलित पताकेन ।
निवह—आवर्तनेन कृतमुष्टिना । अथवा भ्रामितोर्ध्वमुख सूचीमुखेन ।
निधने—स्कंधदेशात्तिर्यग्गताधस्तल पताकेन ।
कलयसि—मुष्टिना ।
करवालं—चलदूर्ध्वाधोगत पताकेन ।
धूमकेतुं—चलदूर्ध्व सूचीमुखेन ।
इव—आवर्तनेन ।
कमपि—व्यावर्तित किंचिदूर्ध्वगत त्रिपताकेन ।
करालं-भयानक दृष्ट्या ।
केशव-पूर्ववत् ।
कल्कि-मणिबन्धगत कर्तरीमुखेन । तुरङ्गमाचार्या ।
शरीर-अङ्गदर्शितांसपक्षेण ॥ १० ॥

श्री जयदेवकवेरिदमुदितमुदारं
शृणु सुखदं शुभदं भवसारम् ।
केशव धृत दशविधरूप जय जगदीशहरे ॥ ११ ॥

श्रीः–शनैरूर्ध्वगतालपल्लवेन ।

जयदेवकवेः–ललाटस्थांजलिना ।

इदं–ऊर्ध्वतलमृगशीर्षेण ।

उदितं–अधरात्पुरोगत हंसास्येन ।

उदारं–लोलितालपल्लवेन ।

श्रुणु–कर्णस्थ सूचीमुखेन ।

सुखदं–हृद्गतपताकेन मुकुलदृष्ट्या ।

शुभदं–उद्वृत्तेन ।

भव–शनैरूर्ध्वगताङ्गदर्शिसंदंशाभ्याम् ।

सारं–आवर्तनेन कृतमुष्टिना ।

केशव–पूर्ववत् ।

दशविधरूप–पुरस्तलाविश्लिष्टांगुलिपताकाभ्याम् ।

जयेत्यादि–पूर्ववत् ॥ ११ ॥

पद्मापयोधरतटी परिरंभलग्न
काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेद
स्वेदांबुपूर मनुपूरयतु प्रियं वः ॥ १२ ॥

पद्मा–विस्तारितोर्ध्वतलपताकाभ्याम् । शनैरूर्ध्वानीतालपल्लवेन कर्षितांचलखटकामुखेन परावृत्तेन शिरसा । अथवा कमलवर्तनया ऊर्ध्वमिलितमृगशीर्षाभ्याम् । हृदिस्वस्तिकीकृतमुकुलाभ्याम् ।

पयोधरतटी–स्वस्तिकीकृतपद्मकोशाभ्याम् ।

परिरंभ–उत्सङ्गेन ।

लग्न–मिलितसूच्यग्राभ्याम् ।
काश्मीर–अधोमुखनिष्पेषितहंसास्येन ।
मुद्रितं–हृदिदर्शितहंसास्येन ।
उरो–हृद्गतसंदंशेन ।
मधुसूदनस्य–वैष्णवस्थानकेन वंशधारणेन च ।
व्यक्त–प्रसारितपताकाभ्याम् ।
अनुरागं–स्निग्दृष्ट्या हृद्गतचतुरेण ।
इव–आवर्तनेन ।
खेलत्–उत्सङ्गेन ।
अनङ्ग–हृदयावेष्टित चतुरेण ।
खेद–विषण्णया दृष्ट्या ।
स्वेदांबु–अङ्काच्चलदधः समानीत त्रिपताकेन ।
पूरं–अधस्तल पुरोलोलितमिलिपताकाभ्याम् । *
प्रियं–हृद्गतचतुरेण ।
वः–पुरः प्रसारितोर्ध्वतलपताकेन ॥ १२ ॥

## अष्टपदी २

श्रितकमलाकुचमन्डल धृतकुंडल ।
कलितललितवनमाल जय जयदेवहरे ॥ १ ॥

श्रित–मिलितसूचीमुखाभ्याम् ।
कमला–कमलवर्तनया कर्षितांचलखटामुखेन ।
कुचमंडले–स्वस्तिकीकृतपद्मकोशाभ्याम् ।

* 'अनुपूरयतु' इति पदस्य अभिनयः मातृकासुप्रमादाल्लुप्तः

धृतकुंडल–कर्णाधोदेशाच्छनै रधस्तलीकृतपताकेन ।
ललित–ललितालपल्लवेन ।
वनमाल–कन्धराज्ञानुपर्यन्तसमानित चलत्खटकामुखाभ्याम् ।
जयजयेत्यादि–पूर्ववत् । उद्वृत्तेन ।
देव–ललाटस्थांजलिना ।
हरे–वैष्णवस्थानकेन ॥ १ ॥

दिनमणिमंडल मण्डन भव खंडन ।
मुनिजनमानसहंस जय० ॥ २ ॥

दिनमणिमण्डल–ऊर्ध्वभ्रामित सूचीमुखेनाकेकरयादृष्ट्या ।
मण्डन–लोलितालपल्लवेन ।
भव–अङ्गदर्शितोर्ध्वगतसंदंशाभ्याम् ।
खंडन–स्कन्धदेशात्तिर्यग्गताधस्तलपताकेन ।
मुनिजन–हृद्गतचलित संदंशेन । अथवा प्रतिदिग्दर्शित सूचीमुखेन प्रावर्णमुद्रया ।
मानस–हृद्गतहंसास्येन ।
हंस–पुरस्थलहंसास्येन ।
जय–पूर्ववत् ॥ २ ॥

कालीयविषधरगंजन जनरञ्जन ।
यदुकुलनलिन दिनेश जय० ॥ ३ ॥

कालीयविषधर–सर्पशीर्षेण ।
गंजन–बहिः क्षिप्तांगुलिद्वयत्रिपताकेन ।

जन–विस्तारितोर्ध्वतलपताकेन ।

रंजन–हृद्गत संदंशेन । लोलितालपल्लवेन च ।

यदुकुल–विस्तारित पताकेन । अथवा शिरस्थांजलिना ।

नलिन–कमलवर्तनया ।

दिनेश–ऊर्ध्वभ्रामित सूचीमुखेनाकेकरदृष्ट्या ।

जय जयेत्यादि–पूर्ववत् ॥ ३ ॥

मधुमुरनरक विनाशन गरुडासन ।
सुरकुलकेलि निदान जय०॥ ४ ॥

मधु–कर्णाधोदेशावेष्टित त्रिपताकेनालीढस्थानकेन वीरदृष्ट्या च ।

मुर–ऊर्ध्वाधस्तलीकृतोर्णनाभाभ्याम् ।

नरक–पुरो भूमिदर्शितपताकेन तालद्वयान्तरितोर्ध्वाधस्तलार्धचन्द्राभ्याम् । रौद्रदृष्ट्या च ।

विनाशन–स्कंधदेशात्तिर्यग्गताधस्तलपताकेन ।

गरुडासन–गरुडस्थानकेन मणिबन्धस्य शिखरेण । अथवा कर्तरी मुखेन ।

सुर–ललाटस्थांजलिना ।

कुल–मंडलीकृतमिलिताग्रसूचीमुखाभ्याम् ।

केलि–हृद्गत विकासितमुकुलेन । अथवा क्षिप्ताक्षिप्तकरणेन ।

निदान–आवर्तनेन कृतमुष्टिना ॥ ४ ॥

अमल कमलदल लोचन भवमोचन ।
त्रिभुवन भवन निधान जय० ॥ ५ ॥

अमल–लोलितसंदंशेन ।

कमल–कमलवर्तनया ।

दल–चतुरेण।

लोचन–अपांगावर्तित चतुरेण।

भव–शनैरूर्ध्वगताङ्गदर्शितसंदंशाभ्याम्।

मोचन–विच्युतमुष्टिपरावर्तनेन।

त्रिभुवन–अधोमध्योर्ध्वदर्शित पताकेन। अथवा भ्रामितोर्ध्वमुख सूचीमुखेन पुरस्तल दर्शित त्रिशूलेन च।

भवन–ऊर्ध्वमिलिताग्र मृगशीर्षाभ्याम्।

निधान–आवर्तितेन कृतमुष्टिना।

जयजयेत्यादि–पूर्ववत्॥ ५॥

जनकसुताकृत भूषण जितदूषण।
समरशमित दशकंठ जयजयेत्यादि०॥ ६॥

जनक–ऊर्ध्वस्थिताधस्तलपताक तालद्वयान्तर्दर्शित बाणहस्तकेन।

सुता–तालान्तरितोर्ध्वाधस्तलार्धचन्द्राभ्याम्। अथवा हृद्गतसंदंशेनाधस्तलीकृतसर्पशीर्षेण च।

कृत–अधोमुखहंसास्येन।

भूषण–स्कंधदेशाच्चलदधः समानीत खटकामुखाभ्याम्। अथवा भूषण धारणमुद्रया प्रत्यंगदर्शनेन।

जित–स्कन्धदेशात्तिर्यग्गताधस्तलपताकेन। अथवा उद्वेष्टित पताकेन।

दूषण–मुखसमीपोर्ध्वाधस्तलोर्णनाभाभ्याम्।

समर–प्रत्यालीढस्थानकेन। वामकृतमुष्टिदक्षिणकर्णाकृष्टखटकामुखेन।

शमित–स्कंधदेशात्तिर्यग्गताधस्तलपताकेन।

दशकण्ठ–पुरस्तल विरलांगुलिपताकाभ्याम् हनोरधोवर्तिताल-पल्लवेन च॥ ६॥

अभिनव जलधर सुन्दर धृतमंदर ।
श्रीमुखचन्द्रचकोर जय० ॥ ७ ॥

अभिनव—लोलितालपल्लवेन ।

जलधर—तिर्यक्प्रसारित शनैरूर्ध्वसमानीत मिलिताधस्तलपताकाभ्याम्

सुन्दर—लोलितालपल्लवेन ।

धृत—ऊर्ध्वतलोर्ध्वस्थित पताकाभ्याम् ।

मन्दर—ऊर्ध्वस्थितालपल्लवेन मंथनरीत्या चतुरस्र हस्तेन च ।

श्री—लोलितालपल्लवेन स्वस्तिकीकृत पद्मकोशाभ्याम् ।

मुख—हनोरधोवर्तितालपल्लवेन ।

चन्द्रचकोर—अर्धचन्द्रंप्रतिदर्शित तिरश्चीन कपित्थेन ।

जयजयेत्यादि—पूर्ववत् ॥ ७ ॥

तव चरणे प्रणतावयमिति भावय ।
कुरुकुशलं प्रणतेषु जय० ॥ ८ ॥

तव—पुरः प्रसारितोर्ध्वतलपताकेन ।

चरणे—चरणदर्शित पताकेन ।

प्रणताः—अवधूतशिरसा ललाटस्थांजलिना ।

वयं—जत्रुदर्शितालपल्लवेन ।

इति—ऊर्ध्वतलकिंचिदग्रोगतं मृगशीर्षेण ।

भावय—हृद्गतसंदंशेन ।

कुरु—अधोमुखहंसास्येन ।

कुशलं—हृद्गतपताकेन । अथवा हृद्गताधस्तल चतुरेण ।

प्रणतेषु—अवधूतशिरसा ललाटस्थांजलिना । जयजयेत्यादि पूर्ववत् ॥

श्रीजयदेवकवेरिदं कुरुतेमुदम् ।
मङ्गलमुज्ज्वलगीतं जयजयदेव हरे ॥ ९ ॥

श्री—शनैरूर्ध्वगतालपल्लवेन ।
जयदेव—अवधूतशिरसा ललाटस्थांजलिना ।
कवेः—अधरात्पुरोगत हंसास्येन ।
इदं—किंचिदधोंगुलिपुरस्तलपताकेन ।
कुरुते—अधोमुखहंसास्येन ।
मुदं—हृद्गत विकसित मुकुलेन ।
मङ्गलं—उद्वृत्तहस्तकेन ।
उज्ज्वल—लोलितसंदंशेन ।
गीतं—अधरात्पुरोगतहंसास्येन ।
जयजय—उद्वृत्तहस्तकेन ।
देव—अवधूतशिरसा ललाटस्थकपोतेन ।
हरे—त्रिभङ्गीस्थानकेन ॥ ९ ॥

वसन्ते वासन्ती कुसुमसुकुमारै रवयवैः
भ्रमन्तीं कान्तारेबहुविहित कृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वर जनित चिन्ताकुलतया
चलद्बाधां राधां सरसमिदमूचे सहचरी ॥ १ ॥

वसन्ते—कांगूलेनालपल्लवाभ्यां च ।
वासन्ती—लताकरचलदूर्ध्वानीत कृतपल्लवेन च ।
कुसुम—कांगूलेन ।
सुकुमारैः—चलदंगुष्ठहंसास्येन ।
अवयवैः—अङ्गदर्शित हंसपक्षेण ।

भ्रमन्तीं—भ्रामितसूचीमुखेन । अथवा भ्रमर्या द्वादश विधायां यथा रुचिर्ग्राह्या ।

कान्तारे—ऊर्ध्वगतत्रिपताकाभ्यां विस्तारितोर्ध्वतलपताकाभ्यां च ।

बहु—आवेष्टितोर्ध्वतलपताकाभ्यां च ।

विहित—शनैरधस्तलीकृतपताकेन ।

कृष्ण—त्रिभङ्गीस्थानकेन ।

अनुसरणां—चलत्पुरः प्रसारिताधोंगुलिपताकेन ।

अमन्दं—चलत्त्रिपताकेन ।

कन्दर्प- हृदावेष्टित चतुरेण ।

ज्वर—विधुताशिरसाचलपताकाभ्यां अभितप्तयादृष्ट्या च ।

जनित—शनैरावेष्टितोर्ध्वतलपताकेन ।

चिन्ता—कपोलगतार्धचन्द्रेण अंचितशिरसा ।

आकुलतया—विषण्णया दृष्ट्या दोलहस्तेकेन च ।

चलद्वाधां—अङ्गचलितैः ।

राधां—स्वास्तिकीकृतपद्मकोशाभ्याम् ।

सरसं—चतुरेण ।

इदं—पुरोदर्शितपताकेन ।

ऊचे- अधरात्पुरोगतहंसास्येन ।

सहचरी—अधस्तलसर्पशीर्षेण ॥ १ ॥

दरविदलितमल्लीवल्लिचंचत्पराग
प्रकटितपटवासैः वासयन्काननानि ।
इहहि वहति चेतः केतकीगन्धबन्धुः
प्रसरदसमबाण प्राणवद्गन्धवाहः ॥ २ ॥

दरविदलिंत—किंचिद्विकासितमुकुलेन ।

मल्लीवल्लि—ऊर्ध्वगत्रिपताकाभ्यां ।. भ्रामितोर्ध्वमुखसूचीमुखेन च ।

चंचत्पराग—विस्तारित चलितांगुष्ठसंदंशेन ।

प्रकटित – विस्तारितोर्ध्वतलपताकेन ।

पटवासैः—चलितांगुष्ठसन्दंशेन ।

वासयन्—नासागतहंसास्येन ।

काननानि—चलदूर्ध्वगत्रिपताकविस्तारितोर्ध्वतलपताकाभ्यां च ।

इहहि—ऊर्ध्वतलमृगशीर्षेण ।

दहति—चलदूर्ध्वगत त्रिपताकेन विधुतशिरसा ।

चेतसा—हृद्गतसंदंशेन ।

केतकी— ऊर्ध्वमिलितत्रिपताकाभ्याम् ।

गन्ध—नासागतहंसास्येन ।

बन्धुः—मिलितसूचीमुखाभ्यां ।

प्रसरत्—ऊर्ध्वतलविस्तारित पताकेन ।

असमबाण—विरलांगुलि पुरस्तलदर्शितपताकेन ।

प्राणवत्—हृद्गत हंसास्येन । तिर्यक्प्रसारित चलत्पुरःसमानीत त्रिपताकेन ॥ २ ॥

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूतांकुर
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्तेपथिकैः कथं अथमपि ध्यानावधानक्षणीः
प्राप्तप्राणसमा समागमरसोल्लासैरमी वासराः ॥

उन्मीलत्—किंचिद्विकासितमुकुलेन ।

मधुगन्ध— नासागतकांगूलेन ।

लुब्ध—संकोचितोर्णनाभेन अथवा मिलितांगुलितलत्रिपताकाभ्याम् ।

मधुप—भ्रमरहस्तेन ।

व्याधूत—कंपितपताकेन ।

चूत—ऊर्ध्वगचलत्रिपताकाभ्याम् ।

अंकुर—ऊर्ध्वतलकिंचिदधिकतर्जनीक कपित्थेन ।
क्रीडत्—क्षिप्ताक्षिप्त करणेन ।
कोकिल—कपित्थेन ।
काकलीकलकलैः—लोलितसंदंशेन कर्णगतसूचीमुखेन च ।
उद्गीर्णकर्णज्वराः— कर्णसमीपे उद्वेष्टित त्रिपताकेन ।
नीयन्ते—आवेष्टितपताकेन ।
पथिकैः—शिथिलांगुलितिर्यग्गतागत पताकेन ।
कथंकथमपि—शनैरावेष्टित पताकेन विषण्णयादृष्ट्या ।
ध्यानावधान—हृद्गतसन्दंशेन निमीलितदृष्ट्या ।
क्षणाः— विच्युतसन्दंशेन ।
प्राप्त—ऊर्ध्वाधस्तल मिलितचतुराभ्याम् ।
प्राणसमा—मिलितसूचीमुखाभ्याम् च ।
समागम—हृद्गतसंदंशेन मिलितसूचीमुखाभ्याम् ।
रस—चतुरेण ।
उल्लासैः—हृद्गतविकसितमुकुलेन ।
अर्मी—ऊर्ध्वाधस्तलमृगशीर्षेण ।
वासराः—विस्तारितोर्ध्वतलपताकेन ॥

---

## अष्टपदी ३

ललितलवङ्गलतापरिशीलन कोमलमलयसमीरे ।
मधुकर निकरकरम्बित कोकिल कूजित कुंजकुटीरे ॥

ललित—लोलितालपल्लवेन ।
लवङ्ग—किंचिदूर्ध्वानीत तर्जनीक कपित्थेन ।
लता—लताहस्तेन । अथवा भ्रामितोर्ध्वगतसूचीमुखेन ।
परिशीलन—मिलितसूचीमुखाभ्याम् ।

कोमल—चलितांगुष्ठहंसास्येन ।
मलयसमीरे—ऊर्ध्वस्थितालपल्लवात्तिर्यग्गतोर्ध्वतलचलत्रिपताकेन ।
मधुकर— अपरहस्तकेन ।
निकर—आंवर्तनेन कृतमुष्टिना । अथवा मण्डलाकार आमितसूची मुखाभ्याम् ।
करम्बित—मिलितसूचीमुखाभ्याम् ।
कोकिल—हंसास्येन ।
कूजित—अधरात्पुरोगतहंसास्येन कर्णगतसूचीमुखेन च ।
कुंजकुटीरे— पल्लवहस्तकेनोर्ध्वमिलिताग्रमृगशीर्षाभ्याम् ॥ १ ॥

विहरति हरिरिह सरसवसन्ते ।
नृत्यति युवति जनेन समं सखि विरहिजनस्य दुरन्ते ॥

विहरति—समंपादाचार्या ।
हरिः—त्रिभङ्गीस्थानकेन ।
इह—पुरोदेशदर्शितपताकेन ।
सरस—चतुरेण ।
वसन्ते—पल्लवकांगूलाभ्याम् ।
नृत्यति—चतुरस्रस्थानकेन रथचक्राचार्या । अथवा भ्रमर्या ।
युवति—स्वस्तिकीकृत पद्मकोशाभ्याम् ।
जनेन—विस्तारितोर्ध्वतलपताकेन ।
*दुरन्ते—विषण्णया दृष्ट्याऽधोमुखशिरसा च ॥ १ ॥

उन्मदमदन मनोरथपथिकवधूजन जनित विलापे ।
अलिकुलसंकुल कुसुमसमूह निराकुल वकुल कलापे ॥

उन्मद—मत्तल्याचार्या मदिरयादृष्ट्या ।

* समं, सखि, विरहि जनस्य, इति पदानां अभिनयः मातृकायां लुप्तः

मदन—हृद्गतावेष्टित चतुरेण। अथवा वामप्रसारितमुष्टिदक्षिणाकृष्ट
खटकामुखाभ्याम्।

मनोरथ—हृद्गतसन्दंशेन।

पथिक—अधोंगुलिवामपार्श्वगतागतपताकेन।

वधू—हृद्गत पद्मकोशाभ्याम्

जन—विस्तारितोर्ध्वतलपताकेन।

जनित—आवेष्टित किंचिदूर्ध्वगतपताकेन।

विलापे—करुणयादृष्ट्याङ्गवलितेन दोलहस्तकेन च।

अलिकुल—भ्रमद्भ्रमराभ्याम्।

संकुल—अधस्तलमिलित लोलितपताकाभ्याम्।

कुसुम—कांगूलेन।

समूह—आवर्तनेन कृतमुष्टिना। अथवा मण्डलीकृत सूचीमुखाभ्यां।

निराकुल—विस्तारितोर्ध्वतलपताकाभ्याम्।

बकुलकलापे—ऊर्ध्वस्थित परस्परमिलितांगुलिपताकाभ्याम्॥ २॥

मृगमदसौरभरभसवशंवदनवदलमालतमाले।
युवजन हृदय विदारणमनसिजनखरुचिकिंशुक जाले॥

मृगमदसौरभ—मृगशीर्षाच्चलदधोगतपताकेननासागताधस्तल शुक
तुन्डेन च।

रभस—आवेष्टित पताकेन।

वशंवद—मिलितसूचीमुखाभ्याम्।

नव—किंचिदधिकतर्जन्यग्रोर्ध्वमुख कपित्थेन।

दलमाल—विस्तारितोर्ध्वतलचतुरेण।

तमाले—चलदूर्ध्वगत्रिपताकाभ्याम्।

युव—निहंचित शिरसा मत्तल्याचार्या।

जन—विस्तारितोर्ध्वतलपताकेन।

हृदय–हृद्गत सन्दंशेन ।
विदारण–रेचितहस्तकेन ।
मनसिज–हृद्गतावेष्टित चतुरेण ।
नख–ताम्रचूडेन ।
रुचि–चलत्रिपताकेन ।
किंशुक–ताम्रचूडेन ।
जाले–अधस्तलमिलित लीलितपताकाभ्याम् ॥ ३ ॥

मदनमहीपति कनकदण्डरुचि केसरकुसुमविकासे ।
मिलितशिलीमुख पाटलिपटलकृतस्मरतूणविलासे ॥

मदन—हृद्गतावेष्टिचतरेण । अथवा लोलितालपल्लवेन ।
महीपति—पुरंस्तलाधोदर्शितपताकेनावर्तनेनकृतमुष्टिस्थशिखरेण ।
अथवा अधस्तलपताकाधोदर्शित बाणहस्तकेन ।
कनक—वामकरस्योपरिचालित सन्दंशेन ।
दंड—ऊर्ध्वमुखसूचीमुखाभ्याम् ।
रुचि—लोलितालपल्लवेन ।
केसर—चलदूर्ध्वगत्रिपताकाभ्याम् ।
कुसुम—कांगूलेन ।
विकासे—विकसितमुकुलेन ।
मिलित—मिलितसूचीमुखाभ्याम् ।
शिलीमुखपाटलपटल —कांगूलोपरिभ्रमद्भ्रमरेणमिलिताधस्तललो-
लितपताकाभ्याम् ।
कृत—अधोमुखहंसास्येन ।
स्मर—हृद्गतावेष्टितचतुरेण ।

तूण—कटिपार्श्वदर्शितालपल्लवादाकर्षित कपित्थेन ।

विलासे—लोलितालपल्लवेन ॥ ४ ॥

विगलितलज्जितजंगदवलोकन तरुणकरुणकृतहासे ।
विरहिनिकृन्तन कुंतमुखाकृतिकेतकदंतुरिताशे ॥ ५ ॥

विगलित—किंचिदधोवेष्टित कर्तरीमुखेन ।

लज्जित—लज्जितया दृष्ट्या परावृत्तेन शिरसा ।

जगत्—विस्तारितपताकेन ।

अवलोकन—अंचितकरणेन कान्तया दृष्ट्या ।

तरुण—कपित्थेन ।

करुण—कांगूलेन ।

कृत—अधोमुखहंसास्येन ।

हासे—प्रसन्नमुखरागेण विकसितमुकुलेन च ।

विरहि—वियुक्तसूचीमुखाभ्याम् ।

निकृन्तन—तिर्यग्गताधस्तलपताकेन ।

कुन्त—स्कन्धसमीपे दर्शितकपित्थेन ।

मुखाकृति—सूचीमुखेन ।

केतक—ऊर्ध्वमुखमिलिततल त्रिपताकाभ्याम् ।

दंतुरित—आवर्तितलताकरेण ।

आशे—दिग्दर्शितसूचीमुखेन ॥ ५ ॥

माधविका परिमलललितेनवमालति जातिसुगन्धौ ।
मुनि मनसामपि मोहनकारिणि तरुणाकारण बन्धौ ॥

माधविका—भ्रामितोर्ध्वगतसूचीमुखेन पल्लवहस्तकेन च । अथवा
चलदूर्ध्वसमानीतलताकरेण ।

परिमल—नासागतकांगूलेन ।

ललिते—लोलितालपल्लवेन ।

नव—ऊर्ध्वमुखकिंचिदधिकतर्जनीकऊर्ध्वग कपित्थेन ।

मालतिजाति—भ्रामितोर्ध्वगतसूचीसुखाभ्यां कांगूलेन च ।

सुगन्धौ—नासागतहंसास्येन ।

मुनि—हृद्गतचालित सन्दंशेन ।

मनसां—हृद्गतहंसास्येन ।

मोहनकारिणी—समासारितमत्तल्याचार्या अधोमुखहंसास्येन ।

तरुण—मत्तल्याचार्या निहंचितेन शिरसा दृप्तदृष्ट्या च ।

अकारण—विच्युतकपित्थेन ।

बन्धौ—हृद्गत पंताकेन ॥ ६ ॥

स्फुरदतिमुक्तलतापरिरंभणमुकुलित पुलकित चूते ।
बृन्दावनविपिने परिसरपरिगत यमुनाजलपूते ॥७॥

स्फुरत्—लोलितालपल्लवेन ।

अतिमुक्तलता—लताकरोर्ध्वसमानीत पल्लवेन ।

परिरंभण—उत्संगेन ।

मुकुलित—मुकुलेन ।

पुलकित—अङ्गदर्शितं चलदूर्ध्वगतहंसपक्षेण ।

चूते—चलदूर्ध्वगतपताकाभ्यां पल्लवाभ्यां च ।

बृन्दावन—विस्तारितोर्ध्वतलपताकाभ्याम् ।

विपिने—चलदूर्ध्वगतत्रिपताकाभ्याम् । चलदूर्ध्वसमानीतलताकरेण च ।

परिसर—पार्श्वपुरस्तलाङ्गुलि पताकेन ।

परिगत—परिवर्तित विस्तारितपताकेन ।

यमुना—ऊर्ध्वभ्रामितसूचीमुखाच्चलदधस्समानीत त्रिपताकेन तेनैव पुरः प्रसारितेन ।

जल—वामाधस्तलदक्षिणोर्ध्वतलचालितावर्तित चलदंगुलिपताकाभ्यां च ।

पूते—शनैरूर्ध्वगतालपल्लवेन ॥ ७ ॥

श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृति सारम् ।
सरसवसन्तसमयवनवर्णन मनुगतमदनविकारम् ॥८॥

श्री—शनैरूर्ध्वगतालपल्लवेन ।

जयदेव—ललाटस्थकपोतेन ।

भणितं—अधरात्पुरोगतहंसास्येन ।

इदं—अधोंगुलिपुरस्तलपताकेन ।

उदयति—विकसितमुकुलेन ।

हरि—त्रिभङ्गीस्थानकेन ।

चरण—चरणदर्शितपताकेन ।

स्मृति—हृद्गतचालित सन्दंशेन ।

सारं—आवर्तनेन कृतमुष्टिना ।

सरस—लोलितालपल्लवेन । अथवा चतुरेण ।

वसन्त—पल्लवकांगूलाभ्याम् ।

समय—ऊर्ध्वतलमृगशीर्षेण ।

वन—चलदूर्ध्वगतत्रिपताकाभ्यां विस्तारितोर्ध्वतलपताकाभ्याम् ।

वर्णनं—अधरात्पुरोगतहंसास्येन ।

अनुगत—वामदेशात्तिर्यगानीतोर्ध्वतलमृगशीर्षेण । अथवा अधोंगुलि पुरःप्रसारित चलत्रिपताकेन ।

मदन—हृद्गतावेष्टितचतुरेण ।

विकारं—कान्तया दृष्टया कमलवर्तनया च ॥ ८ ॥

नित्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलम्
प्रालेयप्लवनेच्छयानुसरति श्रीखंडशैलानिलः ।
किंचित् स्निग्धरसालमौलिमुकुलान्यालोक्यहर्षोदयम्
उन्मीलन्ति कुहुः कुहूरिति कलोत्तालाःपिकानां गिरः ॥

नित्य—आवेष्टितपताकेन ।

उत्सङ्ग— उत्सङ्गेन पार्श्वाधोदर्शितपताकेन ।

वसत्–शनैरधंतलीकृतपताकेन ।

भुजङ्ग–सर्पशीर्षेण । .

कवल–मुखंप्रतिगच्छत्पद्मकोशेन ।

क्लेशात्–विषण्णया दृष्ट्या धुतशिरसा। अथवा दोलहस्तकेनांचित शिरसा ।

इव–आवर्तनेन ।

ईशाचलं–शिरस्थांजलिनापल्लवेन च ।

प्रालेय–विधुतशिरसा ।

प्लवन–पुरोमिलिताधस्तलपार्श्वादधोगतपताकाभ्याम् ।

इच्छया–हृद्गतसन्दंशेन ।

अनुसरति–तिर्यग्गतोर्ध्वतलमृगशीर्षेण ।

श्रीखंड–परावर्तितमुष्टिभ्याम् ।

शैलानिलः–ऊर्ध्वस्थितालपल्लवेन चलत्तिर्यग्गतत्रिपताकेन ।

किंचित्–किंचित्तर्जनीदर्शितोर्ध्वमुखकपित्थेन ।

स्निग्ध–लोलितांगुष्ठोर्ध्वमुखहंसास्येन ।

रसालमौलि—चलदूर्ध्वगत्रिपताकाभ्यां ऊर्ध्वमिलितमुखाभ्याम् ।

मुकुलानि–मुकुलेन ।

आलोक्य—नेत्रांचलेचलत्रिपताकेन तिर्यग्गतदृष्ट्या च ।

हर्षोदयात्—हृद्गतविकासितमुकुलेन ।

कुहुःकुहूरिति कलोत्तालाः—कर्णगतसूचीमुखेन ।

पिकानांगिरः—अधरात्पुरोगतहंसास्येन ॥

॥ इति ललितलवङ्ग ॥ ३ ॥

---

अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयंत्यसौ सखीसमक्षं पुनराह राधिकाम् ॥

अनेक—पार्श्वदेशात्पुरः समानीतसूचीमुखाभ्यां । अथवा आवेष्टित पताकाभ्याम् ।

नारी—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

परिरंभ—उत्संगेन ।

सम्भ्रम—हृद्गतविकसितमुकुलेन ।

मनोहारि—लोलितसन्दंशेन ।

विलास—क्षिप्ताक्षिप्तकरणेन । अथवा निहंचितशिरसा समपादचार्या ।

लालसं—हृद्गतसन्दंशेन । स्निग्धया दृष्ट्या च ।

मुरारिं—त्रिभङ्गीस्थानकेन ।

आरात्—तिर्यग्दर्शिताधोंगुलिपताकेन ।

उपदर्शयन्ती—तिर्यग्दर्शित सूचीमुखेन साच्यादृष्ट्या च ।

असौसखी—कल्पितसखीदर्शितपताकेन ।

समक्षं—पुरोवर्तितपताकेन ।

पुनराह—अधरात्पुरोगतहंसास्येन ।

राधिकां—स्वस्तिकीकृत पद्मकोशाभ्याम् ॥

विश्वेषामनुरञ्जनेन जनयन् आनन्दमिन्दीवर
श्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखिमूर्तिमान् इव मधौमुग्धो हरिःक्रीडति ॥

विश्वेषां— विस्तारितोर्ध्वतलपताकाभ्याम् ।

अनुरंजनेन—लोलितालपल्लवेन ।

जनयन्–आवेष्टितोर्ध्वतलपताकेन ।

आनन्दं—हृद्गतविकसितमुकुलेन हृष्टया दृष्टया च ।

इन्दीवर—कपलवर्तनया ।

श्रेणी-तिर्यग्गताधस्तलमृगशीर्षेण ।

श्यामल—ऊर्ध्वविस्तारित चलत्सन्दंशेन ।

कोमलैः–चलितांगुष्ठहंसास्येन ।

उपनयन्–शनैरधस्तलीकृतपताकेन ।

अंगैः—अङ्गदर्शितहंसपक्षेण ।

अनङ्गोत्सवं—उत्संगेन ।

स्वच्छन्दं–आवेष्टितोर्ध्वगतपताकाभ्याम् ।

व्रजसुन्दरीभिः-शिरस्थितालपल्लवेनाकर्षितांचलखटकामुखेन परावृत्तेन
शिरसा च ।

अभितः—पुरोमुखमण्डलीकृतसूचीमुखाभ्याम् ।

प्रत्यङ्गं–प्रत्यङ्गदर्शित हंसपक्षेण ।

आलिंगितः–उत्संगेन ।

शृङ्गारः—लोलितालपल्लवेन ।

सखि—अधस्तलसर्पशीर्षेण ।

मूर्तिमान्–अधोर्ध्वनीतसन्दंशाभ्याम् ।

इव–आवर्तनेन ।

मधौ–कांगूलपल्लवाभ्याम् ।
मुग्धः–लोलितसन्दंशेन ।
हरिः–त्रिभङ्गीस्थानकेन ।
क्रीडति—मिलितांगुलितलत्रिपताकाभ्याम् ॥

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा
मभ्यर्णेपरिरभ्यनिर्भरमुरः प्रेमांधया राधया ।
साधु, त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति
व्याजादुद्भटचुंबितस्मितमनोहारी हरिःपातु वः ॥

रास—आवेष्टितमिलिताग्रपताकाभ्याम् ।
उल्लास—हृद्गतविकासितमुकुलेन हृष्टया दृष्ट्या च ।
भरेण–अधस्तलपुरोमिलितलोलितपताकाभ्याम् ।
विभ्रमभृतां–क्षिप्ताक्षिप्तकरणेन ।
आभीरवामभ्रुवां–शिरस्थालपल्लवाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा च ।
अभ्यर्ण–पार्श्वदेशदर्शिताधोंगुलिपताकेन ।
परिरभ्यनिर्भरं–उत्संगेन ।
उरः–हृद्गतसन्दंशेन ।
प्रेम–हृद्गतचतुरेण ।
अन्धया–मुकुलया दृष्ट्या ।
राधया–शिरस्थादाकर्षितांचलखटकामुखेन परावृत्तेनशिरसा ।
साधु–लोलितालपल्लवेन ।
त्वत्–पुरःप्रसारितोर्ध्वतलपताकेन ।
वदनं–हनोरधावर्तितालपल्लवेन ।
सुधामयं—अर्धचन्द्रेण ।

इति–आवर्तितपताकेन ।

व्याहृत्यगीतस्तुति–अधरात्पुरोगतहंसास्येन ।

व्याजात्–आवेष्टिताधस्तलपताकेन ।

उद्भट–आवर्तितोर्ध्वगतपताकेन

चुम्बित–अधरसमीपाधोर्ध्वमुखमुकुलाभ्याम् ।

स्मित–प्रसन्नमुखरागेण ।

मनोहारी–हृद्गतसन्दंशेन ।

हरिः–त्रिभङ्गीस्थानकेन ।

पातु–शनैरधस्तलीकृतपताकेन ।

वः–पुरःप्रसारितोर्ध्वतलपताकेन ॥

---

## अष्टपदी ४

चन्दनचर्चितनीलकलेबर पीतवसनवनमाली ।
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ॥१॥

चन्दन—आरात्रिकशिरसा परावर्तितमुष्टिभ्याम् ।

चर्चित—अङ्गलेपित हंसपक्षेण । आधूत शिरसा ।

नील—ऊर्ध्वविस्तारितचलत्सन्दंशेन । उत्क्षिप्तशिरसा ।

कलेबर—अङ्गदर्शित हंसपक्षेण ।

पीत—करभोपरिचलितसन्दंशेन ।

वसन—पार्श्वदेशान्नाभिपर्यन्तानीत परस्परसन्मुखचलत्खटकामुखाभ्यां अथवा स्कंधदेशात्पुरःसमानीतखटकामुखाभ्याम् ।

वनमाली—स्कन्धदेशाज्जानुपर्यन्तानीतखटकामुखाभ्याम् ।

केलि—मिलितांगुलितलत्रिपताकाभ्यां। अथवा मुखसमीपाधोर्ध्व-
मिलितमुकुलाभ्याम्।

चलत्-विश्लिष्टांगुलिचलत्पताकेन।

मणि—चलत्कांगूलेन।

कुण्डल-कर्णादधस्थितहंसास्याभ्याम्।

मण्डित-परिवाहितशिरसा लोलितालपल्लवेन च।

गन्ड-उत्तानवंचितेन।

युग-अर्धपताकेन।

स्मित—प्रसन्नमुखरागेण हृष्टया दृष्ट्या च।

शाली-परिवाहितशिरसा लोलितालपल्लवेन च॥ १॥

हरिरिहमुग्धवधूनिकरे विलासिनि विलसति केलिपरे॥

हरिः-त्रिभङ्गीस्थानकेन।

इह-अधांगुलिपुरोदेशदर्शितपताकेनावधूतशिरसा च।

मुग्धवधू—हृत्समीपे स्वस्तिकीकृत कांगूलाभ्यां। अथवा मुकुलाभ्यां।

निकरे—पार्श्वदेशाच्छनैरानीत परस्पर सन्मुखसूचीमुखाभ्याम्।

विलासिनि-निहंचितेन शिरसा समपादचार्या। अथवा क्षिप्ताक्षिप्त
करणेन।

विलसति-परिवाहितशिरसा लोलितालपल्लवेन च।

केलिपरे-मुखसमीपे ऊर्ध्वाधोमुखमुकुलाभ्यां उत्सङ्गेन च॥

पीनपयोधरभारभरेणहरिं परिरभ्यसरागम्।
गोपवधूरनुगायति काचिदुदंचित पञ्चमरागम्॥ २॥

पीनपयोधर—स्वस्तिकीकृतालपल्लवाभ्याम्।

भारभरेण—वक्षःसमीपे शनैरधस्तलीकृतपताकाभ्याम्।

हरिं–त्रिभङ्गीस्थानकेन ।

परिरभ्य–उत्सङ्गेनमुकुल दृष्टया च ।

सरागं–हृद्गतसन्दंशेन स्निग्धया दृष्ट्या च ।

गोपवधूः–शिरस्थालपल्लवाकर्षितांचलखटकामुखपरावृत्तशिरोभिः ।

अनुगायति–अधरात्पुरोगतहंसास्येनावधूत शिरसा च ।

काचित्–पार्श्वगतसूचीमुखेन ।

उदंचित–कण्ठदेशादधर पुरःसमानीत हंसास्येन ।

पञ्चमरागं–कर्णगतसूचीमुखेन ॥ २ ॥

कापिविलास विलोलविलोचन खेलन जनितमनोजम् ।
ध्यायति मुग्धवधूरधिकं मधुसूदन वदनसरोजम् ॥३॥

कापि–पार्श्वगतसूचीमुखेन ।

विलास–समपादचार्या ललितया दृष्ट्या च ।

विलोल–लोलितया दृष्ट्या च ।

विलोचन–अपाङ्गावर्तित चलत्रिपताकेन ।

खेलन–कान्तया दृष्ट्या ।

जनित–आवेष्टित किंचिदूर्ध्वगतपताकेन ।

मनोजं–हृद्गतावेष्टितचतुरेण स्निग्धया दृष्ट्या च ।

ध्यायति–मुकुलित दृष्ट्या च समशिरसा हृद्गतसन्दंशेन ।

मुग्धवधूः–हृद्गतस्वस्तिकीकृतकांगूलाभ्याम् ।

अधिकं–आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

मधुसूदन–त्रिभङ्गीस्थानकेन ।

वदन–हनोरधावर्तितालपल्लवेन ।

सरोजं–कमलवर्तनया ॥ ३ ॥

कापि कपोलतले मिलितालपितुं किमपि श्रुतिमूले।
चारु चुचुंब नितम्बवती दयितं पुलकैरनुकूले ॥४॥

कापि–धुतशिरसा पार्श्वगतसूचीमुखेन।

कपोलतले–उत्तानवंचितेन।

मिलिता–मिलितसूचीमुखाभ्याम्।

आलपितुं–अधरात्पुरोगतहंसास्येन।

किमपि–आवर्तित चतुरेण। अथवा विच्युतकपित्थेनं।

श्रुतिमूले–कर्णाधोदर्शितहंसास्येन।

चारु–लोलितालपल्लवेन।

चचुम्ब–अधरसमीपे ऊर्ध्वाधोमुखमुकुलाभ्याम्।

नितम्बवती–नितम्बहस्तकेन।

दयितं–हृद्गतपताकेन।

पुलकैः–कपोलेचलत्रिपताकेन।

अनुकूले–शनैरावर्तितपताकेन। अथवा मिलितसूचीमुखाभ्याम् ॥४॥

केलिकलाकुतुकेन च काचिदमुं यमुनाजलं कूले।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेणदुकूले ॥ ५ ॥

केलिकला–उत्सङ्गेनाधरसमीपे ऊर्ध्वमिलितमुकुलाभ्याम् स्निग्धया दृष्टया च।

कुतुकेन–हृद्गत विकसितमुकुलेन हृष्टया दृष्टया च। आवर्तित पताकेन।

काचित्–पार्श्वगतसूचीमुखेन धुतशिरसा च।

अमुं–अधोंगुलिपुरस्तलपताकेनावधूतशिरसा च।

यमुना–भ्रामितोर्ध्वमुखसूचीमुखाभ्यां समानीततिर्यक्प्रसारितत्रिपताकेन।

जल—अधोर्ध्वतलचलदंगुलयावर्तित परावर्तित पताकाभ्याम् ।

कूले—चलत्पुरःप्रसारित त्रिपताकाभ्यां । अथवा मकरहस्तकेन ।

मञ्जुल—लोलितालपल्लवेन ।

वञ्जुल—चलदूर्ध्वगत्रिपताकाभ्याम् ।

कुञ्ज—चलदूर्ध्वसमानीतलताकरेण । मिलितमुखमृगशीर्षाभ्यां च ।

गतं—शनैरावेष्टित तिर्यग्गतपताकेनाधूतशिरसा च ।

विचकर्ष—आकृष्टवसन खटकामुखेन ।

करेण—करदर्शितपताकेन ।

दुकूले—स्कंन्धदेशान्मण्डलाकारपुरःसमानीत खटकामुखाभ्याम् ॥ ५ ॥

करतलताल तरलवलयावलि कलित कलस्वन वंशे ।
रासरसे सहनृत्यपराहरिणा युवतिः प्रशशम्से ॥ ६ ॥

करतलताल—कृततालिकापताकाभ्याम् ।

तरल—चलत्पताकेन ।

वलयावलिं—प्रकोष्ठगतार्धचन्द्रेण ।

कलित—आवेष्टितपताकाभ्यां मिलितसूचीमुखाभ्यां च ।

कलस्वन—कर्णगतसूचीमुखेन । अथवा कर्णगतहंसास्येन धुतं शिरसा ललितया दृष्टया च ।

वम्शे—वंशधारणमुद्रया ।

रासरसे—त्रिभङ्गीस्थानकेन हृदि स्वस्तिकीकृत पद्मकोशाभ्यां परस्परान्तर्गतांगुलिपताकाभ्यां । अथवा नृत्यविशेषेण ।

सह—मिलितसूचीमुखाभ्याम् ।

नृत्यपरा—भ्रमर्या । अथवा गतिविशेषेण ।

हरिणा—त्रिभङ्गीस्थानकेन ।

युवतिः—स्वस्तिकीकृतपद्मकोशाभ्याम् ।
प्रशशंसे—अधरात्पुरोगतहंसास्येन । लोलितालपल्लवेन च ॥ ६ ॥

श्लिष्यति कामपि चुम्बति कामपि रमयति कामपि रामाम् ।
पश्यति सस्मित चारुपरामपरामनुगच्छति वामाम् ॥ ७ ॥

श्लिष्यति—उत्सङ्गेन मुकुलया दृष्ट्या च ।
कामपि—पार्श्वगतसूचीमुखेनाधूतशिरसा च ।
चुम्बति—अधरसमीपेशनैरूर्ध्वाधोमिलितमुकुलाभ्यां अवधूतशिरसा च।
कामपि—वामपार्श्वगतसूचीमुखेन धुतशिरसा च ।
रमयति—मिलिततलत्रिपताकाभ्याम् ।
कामपि—तिर्यग्दर्शितसूचीमुखेन धुतशिरसा च ।
रामां—आकर्षितांचल खटकामुखेन परावृत्तेन शिरसा च ।
पश्यति—ललितया दृष्ट्या ।
सस्मित—प्रसन्नमुखरागेन हास्यदृष्ट्या च ।
चारु—लोलितसन्दंशेन परिवाहितशिरसा ।
परां—तिर्यग्गतसूचीमुखेन धुतशिरसा च ।
अपरां—तिर्यग्दर्शितसूचीमुखेन ।
अनुगच्छति—ऊर्ध्वतलतिर्यग्गतमृगशीर्षेण ।
वामां—आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा कटाक्षेण च ॥

श्रीजयदेवकवेरिदमद्भुत केशव केलिरहस्यम् ।
बृन्दावनविपिने चरितं वितनोतु शुभानि यशस्यम् ॥८॥

श्री—ऊर्ध्वगतालपल्लवेनाधूतशिरसा ।
जयदेव—ललाटस्थांजलिना धुतशिरसा च ।
कवेः—अधरात्पुरोगतहंसास्येन ।

इदं—अधोंगुलिपुरस्तलपताकेन ।

अद्भुत—अद्भुतदृष्ट्या ऊर्ध्वगतालपल्लवेन ।

केशव—त्रिभङ्गीस्थानकेन ।

केलि—मिलितांगुलितलत्रिपताकाभ्यां कान्तया दृष्ट्या च ।

रहस्यं—कर्णगतहंसास्येन ।

बृन्दावनविपिने—चलदूर्ध्वगतत्रिपताकाभ्यां पल्लवेन विस्तारितपता काभ्यां च ।

चरितं—ऊर्ध्वतलविस्तारितपताकेन ।

वितनोतु—विस्तारितालपल्लवाभ्याम् ।

शुभानि—उद्वृत्तहस्तकेन ।

यशस्यं—ओलितसन्दंशेन ॥ ८ ॥

विहरतिवने राधा साधारणप्रणये हरौ
विगलित निजोत्कर्षादीर्षावशेन गतान्यतः ।
क्वचिदपि लताकुंजे गुंजन्मधुव्रतमण्डली
मुखरशिखरेलीना दीनाप्युवाच रहःसखीम् ॥

विहरति—समपादचार्या ।

वने—ऊर्ध्वतलचलत्रिपताकाभ्यां विस्तारितपताकाभ्यां च ।

राधा—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

साधारण—आवेष्टितपताकेन ।

प्रणये—हृद्गतचतुरेण स्निग्धया दृष्ट्या च ।

हरौ—त्रिभङ्गीस्थानकेन ।

विगलित—हृदये उद्वेष्टित कर्तरीमुखेन ।

निजोत्कर्षात्—जत्रुदर्शितालपल्लवेन । धुतशिरसा शनैः किंचिदूर्ध्व समानीतालपल्लवेन ।

ईर्ष्या—क्रुद्धया दृष्ट्या हृदयादूर्ध्वगतचलत्त्रिपताकेनारक्तमुखरागेण च।

वशेन—शनैरधस्तलीकृतपताकेन।

गता – अधोंगुलिचलत्पुरः प्रसारितत्रिपताकेन।

अन्यतः—आवर्तिततिर्यग्दर्शित सूचीमुखेन।

क्वचित्—आवेष्टितपताकेन।

अपि—आवर्तनेन।

लताकुंजे—चलदूर्ध्वसमानीत लताकरमिलितमुखमृगशीर्षाभ्याम् च।

गुंजत्—कर्णगतसूचीमुखेन। अथवा अधरात्पुरोगतहंसास्येन।

मधुव्रत—भ्रामितभ्रमरेण।

मन्डली—विस्तारितपताकाभ्याम्।

मुखरशिखरे—अधरात्पुरोगतहंसास्येन। शिखरेण च।

लीना—लीनकरेण शनैः कृतकपोतेन।

दीना—दीनदृष्ट्या पुष्पपुटेन अधोमुख शिरसा च।

अपि—आवर्तनेन।

उवाच—अधरात्पुरोगत हंसास्येन।

रहः—ऊर्ध्वमुखसूचीमुखेन।

सखीं—अधस्तलसर्पशीर्षेण हृद्गतपताकेन च॥

---

## अष्टपदी ५

सञ्चरदधरसुधामधुरध्वनि मुखरितमोहनवंशम्।
चलित दृगंचल चंचल मौलि कपोलविलोलवतंसम्॥

सञ्चरदधर—अधरोपरिचलित सन्दंशेन।

सुधामधुरध्वनि—लोलितसन्दंशेन कर्णगतहंसास्येन च।

मुखरित—अधरात्पुरोगतहंसास्येन च ।
मोहन—मदिरया दृष्ट्या मत्तल्याचार्या च ।
वंशं—वंशधारणमुद्रया ।
चलितदृगंचल—कटाक्षेण ।
चंचलमौलि—धुतशिरसा ।
कपोल—उत्तानवंचितेन ।
विलोल—लोलितालपल्लवेन ।
अवतंसं—गण्डस्थलोर्ध्वभागगत सूचीमुखेन ॥ १ ॥

रासे हरिमिह विहित विलासम् ।
स्मरतिमनो मम कृत परिहासम् ॥

रासे—त्रिभङ्गीस्थानकेन । हृदि स्वस्तिकीकृतपद्मकोशाभ्यां परस्परान्त र्गतांगुलिपताकाभ्यां च ।
हरिं—त्रिभङ्गीस्थानकेन ।
इह—अधोंगुलिपुरस्तलपताकेन ।
विहित—शनैरधस्तलीकृतपताकेन ।
विलासं—क्षिप्ताक्षिप्तकरणेन । अथवा निहंचितशिरसा समपदाचार्या ।
स्मरति—हृद्गतचलितांगुष्ठसन्दंशेन ।
मनो—हृद्गतसंदंशेन ।
मम—जत्रुदर्शितालपल्लवेन ।
कृत-अधोमुखहंसास्येन ।
परिहासं—हास्यदृष्ट्या प्रसन्नमुखरागेण च ॥

चन्द्रकचारु शिखण्डि शिखण्डकमण्डलवलयित केशम् ।
प्रचुरपुरन्दरधनुरनुरांजितमेदुरमुदितसुवेशम् ॥ २ ॥

चन्द्रक—अर्धचन्द्रेण ।

चारु–लोलितालपल्लवेन।

शिखण्डि—मयूरहस्तकेन।

शिखण्डकमण्डल—पुरस्तलाविरलांगुलि मण्डलीकृतपताकाभ्याम्।

वलयित—केशबन्धेन।

केशं—शिरोभागाचलत्तिर्यक्प्रसारितारालेन।

प्रचुर—विस्तारितोर्ध्वतलपताकाभ्याम्।

पुरन्दर–प्राचीदिग्दर्शितसूचीमुखेनाधस्तलपतकस्य तालद्वयान्तरस्थित बाणहस्तकेन।

धनुः–वामपुरःप्रसारितमुष्टि दक्षिणाकृष्ट खटकामुखाभ्याम्।

अनुरञ्जित–लोलितालपल्लवेन।

मेदुरमुदिर–तिर्यक्प्रसारितोर्ध्वानीताधस्तलमिलितपताकाभ्याम्।

सुवेशं—अङ्गदर्शितशनैरूर्ध्वानीतसन्दंशाभ्याम् ॥ २ ॥

गोपकदम्बनितम्बवती मुखचुम्बनलम्भितलोभम्।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ ३ ॥

गोप—गोमुखहस्तेन भ्रामित सूचीमुखेन च।

कदम्ब—आवर्तन कृतमुष्टिना। अथवा मण्डालीकृत परस्परसंमुख सूचीमुखाभ्याम्।

नितम्बवती—नितम्बहस्तकेन।

मुख—हनोरधावर्तितालपल्लवेन।

चुम्बन—अधरसमीपाधोर्ध्वमुखमीलितमुकुलाभ्याम्।

लम्भित–आवर्तनेन।

लोभं—संकोचितोर्णमाभेन।

बन्धुजीव—कांगूलेन।

मधुर—लोलितालपल्लवेन ।

अधर—अधरोपरिचालित सन्दंशेन ।

पल्लव—पल्लवेन ।

उल्लसित-अंधरसमीपे विकसितमुकुलेन ।

स्मित-प्रसन्नमुखरागेण ।

शोभं—लोलितालपल्लवेन ॥ ३ ॥

विपुलपुलकभुज पल्लववलयित वल्लवयुवति सहस्रम् ।
करचरणोरसि मणिगणभूषणकिरण विभिन्नतमिस्रम् ॥४॥

विपुल—विस्तारितपताकाभ्याम् ।

पुलक—अङ्गदर्शितचलद्धंसपक्षेण ।

भुज—भुजदर्शितपताकेन ।

पल्लव—पल्लवेन ।

वलयित-उत्सङ्गेन ।

वल्लव-गोमुखभ्रामितसूचीमुखाभ्याम् ।

युवति-स्वस्तिकीकृत पद्मकोशाभ्याम् । अथवा

वल्लयुवति शिरस्थलपल्लवेनाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा

सहस्रं-बाणहस्तकेन ।

कर—करदर्शितपताकेनं ।

चरण— चरणदर्शितंपताकेन ।

उरसि—हृद्गतसन्दंशेन ।

मणि—चलत्कांगूलेन ।

गण—आवर्तनेन कृतमुष्टिना ।

भूषण— प्रत्यङ्गं यथोचितदर्शितार्धचन्द्राभ्यां हंसास्याभ्यां च ।

किरण—चलत्रिपताकेन ।

विभिन्न—वियुक्तसूचीमुखाभ्याम् ।

तमिस्रं-विस्तारितोर्ध्वमुखपताकेन ॥ ४ ॥

जलदपटलचलदिन्दुविनिन्दक चन्दनतिलक ललाटम्
पीनपयोधरपरिसरमर्दननिर्दयहृदयकवाटम् ॥ ५ ॥

जलदपटल—तिर्यक्प्रसारितोर्ध्वमिलिताधस्तलपताकाभ्याम् ।

चलदिन्दु-चलदूर्ध्वगतार्धचन्द्रेण उत्क्षिप्तशिरसा च ।

विनिन्दक—अधरात्पुरोविक्षिप्तसन्दंशेन ।

चन्दन—परावर्तितमुष्टिभ्यां आरात्रिक शिरसा च ।

तिलक—ललाटगतत्रिपताकेन ।

ललाटं—उत्तानवञ्चितेन ।

पीनपयोदर—हृल्लग्नस्वस्तिकीकृतालपल्लवाभ्याम् ।

परिसरमर्दन—कुचोपरिमर्दितपताकेन ।

निर्दय—हृद्देशे परावर्तित हंसपक्षेण । अथवा मुष्टिताडित सन्दंशेन
रौद्रया दृष्ट्या च ।

हृदय—हृद्गतसन्दंशेन ।

कवाटं—परावर्तितमिलितपताकाभ्याम् ॥ ५ ॥

मणिमय मकरमनोहर कुण्डलमण्डित गण्डमुदारम् ।
पतिवसनमनुगतमुनिमनुजसुरासुर वर परिवारम् ॥६॥

मणिमय— चलत्कांगूलेन मिलितसूचीमुखाभ्यां च ।

मकर—मकरहस्तकेन ।

मनोहर—लोलितालपल्लवेन ।

कुण्डल—कर्णादधोदर्शितचलद्धंसास्येन ।

मण्डित—लोलितसन्दंशेन ।

गण्डं—उत्तानवंचितेन।
उदारं—लोलितालपल्लवेन।
पीत—करभोपरि चालितसन्दंशेन।
वसनं—स्कन्धदेशान्मण्डलाकार पुरःसमानीत खटकामुखाभ्याम्।
अनुगत—वामदेशात्पार्श्वानीतोर्ध्वतलमृगशीर्षेण।
मुनि—हृद्गतचलितांगुष्ठसन्दंशेन मुकुलया दृष्ट्या च।
मनुज—जत्रुदर्शितालपल्लवेन।
सुर-शिरस्थांजलिना।
असुर—मुखसमीपे स्वस्तिकीकृतोर्णनाभाभ्याम्।
वर—आवेष्टितोर्ध्वगतपताकेन। अथवा मुष्टिस्थशिखरेण।
परिवारं—विस्तारितोर्ध्वतलपताकाभ्याम् ॥ ६ ॥

विशदकदम्बतले मिलितं कलिकलुषभयं शमयन्तम्।
मामपि किमपि तरङ्गदनङ्ग दृशा मनसा रमयन्तम् ॥ ७ ॥

विशद—लोलितालपल्लवेन।
कदम्ब—चलदूर्ध्वगतत्रिपताकाभ्याम् पल्लवेन च।
तले—अधोंगुलिपुरस्तलपताकेन।
मिलितं—मिलितसूचीमुखाभ्याम्।
कलि—विस्तारितोर्ध्वतलपताकाभ्याम्।
कलुषभयं—कातरया दृष्ट्या विधुतशिरसा।
शमयन्तं—स्कंन्धात्तिर्यगधस्तलसमानीतपताकेन।
मां—हृद्गतपातकेन। अथवा जत्रुदर्शितालपल्लवेन।
अपि—आवर्तनेन।
किमपि—विच्युतकपित्थेन।
तरङ्गत्—तिर्यक्प्रसारितचलत् पुरःसमानीताधस्तलत्रिपताकेन।

अनङ्ग—हृद्यावेष्टितचतुरेण ।

दृशा—अपाङ्गावर्तित चलत्रिपताकेन कान्तया दृष्ट्या च ।

मनसा—हृद्गतचतुरेण ।

रमयन्तं--लोलितालपल्लवेन । अथवा मिलितांगुलितलत्रिपताकाभ्याम् ॥

श्रीजयदेव फणितमतिसुन्दर मोहनमधुरिपुरूपम् ।
हरिचरणस्मरणं प्रति सम्प्रति पुण्यवतामनुरूपम् ॥ ८ ॥

श्री—ऊर्ध्वगतालपल्लवेन ।

जयदेव—ललाटस्थांजलिना ।

भणितं—अधरात्पुरोगतहंसास्येन ।

अति--आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

सुन्दर—लोलितसन्दंशेन ।

मोहन—लोलितालपल्लवेन । अथवा मदिरया दृष्ट्या निहंचित शिरसा ।

मधुरिपुरूपं— त्रिभङ्गीस्थानकेन ।

हरि— शिरस्थांजलिना ।

चरण—चरणदर्शितपताकेन ।

स्मरणं—हृच्चालितांगुष्ठसन्दंशेन ।

प्रति—आवर्तनेन ।

सम्प्रति—ऊर्ध्वतलमृगशीर्षेण ।

पुण्यवतां—अधोमुख विकासितमुकुलेन तिर्यग्विस्तारितसूचीमुखेन ।

अनुरूपं—मिलितसूचीमुखाभ्याम् ॥ ८ ॥

दुरालोकस्तोकस्तबकनवकाशोकलतिका
विकासः कासारोपवन पवनोपि व्यथयति ।
अपिभ्राम्यद्भृंगीरणित रमणीयानुमुकुल
प्रसूतिश्चूतनां सखि शिखरिणीयं सुखयते ॥

दुरालोक—आकेकरया दृष्टया ।
स्तोक—ऊर्ध्वमुखकिंचिदधिकतर्जनीय कपित्थेन ।
स्तबक—अधोमुखालपल्लवेन । नासागतशुकतुण्डेनोद्वाहितोरसाच ।
नव—ऊर्ध्वमुखकपित्थेन ।
अशोकलतिका—लताकरोर्ध्वसमानीत कृतपल्लवेन च ।
विकासः—विकसितमुकुलेन ।
कासार—अधोंगुल्याधः पुरोवर्तितपताकाभ्याम् ।
उपवन—चलदूर्ध्वगतत्रिपताकाभ्यां विस्तारितोर्ध्वतलपताकाभ्यां च
पवनः—तिर्यक्प्रसारितचलत्पुरस्समानीत त्रिपताकेन।
अयं—अधोंगुलिदर्शित पुरस्तलपताकेन ।
व्यथयति—विषण्णया दृष्ट्यांगवलितेन च ।
अपि—आवर्तनेन
भ्राम्यत्—ऊर्ध्वमुखभ्रामितसूचीमुखेन ।
भृङ्गी—भ्रमरहस्तकेन ।
रणित—अधरात्पुरोगत हंसास्येन । अथवा कर्णगतसूचीमुखेन ।
रमणीय—लोलितालपल्लवेन ।
अनुमुकुल—मुकुलेन ।
प्रसूतिः—आवर्तितोर्ध्वगतपताकेन ।
चूतानां—चलदूर्ध्वगतत्रिपताकाभ्यां पल्लवेन च ।
सखि—अधस्तलसर्पशीर्षेण हृद्गतपताकेन च ।
शिखरिणीयं—ऊर्ध्वदर्शितशिखरेण पुरस्तलदर्शितपताकेन च ।
सुखयते—हृद्गतपताकेन मुकुलया दृष्टया च ॥

हस्तस्रस्त विलासवंशमनृजुभ्रूवल्लिमद्बल्लवी
बृन्दोत्सारिदृगन्तवीक्षितमति स्वेदार्द्रगण्डस्थलम् ।

मामुद्वीक्ष्य विलज्जितस्मित सुधामुग्धाननं कानने
गोविन्दं व्रंजसुन्दरी जनवृतं पश्यामि हृष्यामि च ॥

हस्त—परस्परदर्शितपताकाभ्याम् ।

स्रस्त—उद्वेष्टिताधोमुखकर्तरीमुखेन । अथवा विगलितमुष्टिना ।

विलास—समपादाचार्या निहंचितशिरसा ललितया दृष्ट्या च ।

वम्शां—वंशधारणमुद्रया ।

अनृजुभ्रूवल्लिमद्वल्लवी—ललितया दृष्ट्या शिरस्थालपल्लवेनाकर्षितां चलखटकामुखेन परावृत्तेन शिरसा ।

बृंद—पार्श्वदेशात्पुरःसमानीतमिलिताग्रसूचीमुखाभ्यां। अथवा आवर्तनेन कृतमुष्टिना ।

उत्साह—हृद्गत विकासितमुकुलेन हृष्टदृष्ट्या च ।

दृगन्तवीक्षितं—कटाक्षेण ।

अति—आवर्तित किंचिदूर्ध्वगतपताकाभ्याम् ।

स्वेदार्द्रगण्डस्थलं—गण्डस्थलाच्चलदधोगत त्रिपताकेन विक्षिप्तांगुलि मुकुलेन ।

मां—जत्रुदर्शितालपल्लवेन ।

उद्वीक्ष्य—उल्लोकितेनापांगावर्तित त्रिपताकेन ।

विलज्जितं—लज्जितया दृष्ट्या परावृत्तेन शिरसा च ।

स्मित—प्रसन्नमुखरागेण हास्यदृष्ट्या च ।

सुधा—अर्धचन्द्रेण ।

मुग्धाननं—लोलितसन्दंशेन हनोरधावर्तितालपल्लवेन च ।

कानने—चलदूर्ध्वगतत्रिपताकाभ्यां कृतपल्लवेन च विस्तारिपताकाभ्यां च ।

गोविन्दं—त्रिभङ्गीस्थानकेन ।

व्रज—गोमुखेन विस्तारितोर्ध्वतलपताकाभ्यां च ।

सुन्दरी—स्वस्तिकीकृत पद्मकोशाभ्याम् ।

जन—विस्तारितोर्ध्वतलपताकाभ्याम् ।

वृत्तं—मण्डलाकारमिलिताग्रपताकाभ्यां । अथवा पार्श्वदेशात्पुरः समानीतमिलिताग्रसूचीमुखाभ्याम् ।

पश्यामि—अपाङ्गे विलोलितचतुराभ्याम् ।

हृष्यामिच—हृद्गतविकासितमुकुलेन हृष्टया दृष्टया च ॥

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
वहति च परीतोषं दोषं विमुञ्चति दूरतः ।
युवतिषु वलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किम् ॥

गणयति—क्रमेण गणितांगुलिकृतपताकेन ।

गुण—विस्तारितोर्ध्वतलपताकेन स्कन्धदेशात्किंचिदधः समानीत विरलांगुलिपताकेन प्रसारितवाममुष्ट्या कर्णाकृष्टखटकामुखेन परावृत्तेन शिरसा मिलितसूचीमुखाभ्यां च ।

ग्रामं—व्यावर्तनेन कृतमुष्टिना ।

भ्रामं—हृद्यावेष्टितचतुरेण ।

भ्रमात्—मदिरया दृष्टया ।

अपि—आवर्तनेन ।

न—पुरस्तलकंपितपताकेन धुतशिरसा च ।

ईहते—हृद्गतसन्दंशेन ।

वहतिच—स्कन्धगतालपल्लवेन ।

परीतोषं—हृद्गत विकासितमुकुलेन ।

दोषं—अधरात्पुरोगतहंसास्येन । पुरस्तललोलितपताकेन ।

विमुञ्चति दूरत:—उद्वेष्टितपताकेन ।
युवतिषु—स्वस्तिकीकृतपद्मकोशाभ्याम् ।
वलत्—आवेष्टिताधस्तलपताकेन ।
तृष्णे—हृद्गत सन्दंशेन स्निग्धया दृष्ट्या च ।
कृष्णे—त्रिभङ्गीस्थानकेन ।
विहारिणि—समपादचार्या निहंचितेन शिरसा ।
मां—जत्रुदर्शितालपल्लवेन ।
विना—उरस्तलकम्पितपताकेन । अथवा वियुक्तसूचीमुखाभ्याम् ।
पुनरपि—वारं वारं आवेष्टितपताकेन ।
मनो—हृद्गतसन्दंशेन ।
धामं—ताम्रचूडेन ।
कामं—हृद्गतावेष्टितचतुरेण ।
करोति—अधोमुखहंसास्येन ।
करोमिकिं—जत्रुदर्शितालपल्लवेन ऊर्ध्वतललोलितपताकेन च ॥

---

## अष्टपदी ६

निभृत निकुञ्जगृहं गतया निशि रहसि निलीयवसन्तम् ।
चलित विलोकित सकलदिशारतिरभसभरेण हसन्तम् ॥

निभृत—ऊर्ध्वमिलिताधस्तलपताकाभ्याम् ।
निकुंजगृहं—ऊर्ध्वसमानीतलताकरेण कृतपल्लवेनोर्ध्वमिलिताग्रमृगशीर्षाभ्यां च ।
गतया—ऊर्ध्वतलतिर्यग्गतमृगशीर्षेण ।
निशि—ऊर्ध्वविस्तारितपताकेन ।
रहसि—ऊर्ध्वमुखसूचीमुखेन ।

निलीय—लीनकरणेन शनैःकृतकपोतेन च ।

वसन्तं—शनैरधस्तलपताकेन ।

चकित—त्रस्तया दृष्ट्या ।

विलोकित—सचमत्कारं अपाङ्गावेष्टितत्रिपताकेन ।

सकलदिशा—सर्वदिग्दर्शितसूचीमुखेन ।

रतिरभस—मिलितांगुलितलत्रिपताकाभ्याम् । अथवा उत्सङ्गेन कान्तया दृष्ट्या च ।

भरेण—चतुरेण ।

हसन्तं—प्रसन्नमुखरागेण हास्यदृष्ट्या च ॥

सखिहे केशिमथनमुदारम् ।
रमय मया सह मदनमनोरथ भावितया सविकारम् ॥

सखिहे—अधस्तलसर्पशीर्षदर्शितपताकेन ।

केशिमथनं—मुखसमीपे स्वस्तिकीकृतोर्णनाभाभ्यां स्कन्धदेशात्तिर्यग्गत पताकेन च । अथवा त्रिभङ्गीस्थानकेन ।

उदारं—लोलितालपल्लवेन ।

रमय—उत्सङ्गेन मुखसमीपे ऊर्ध्वाधोमुखमिलितमुकुलाभ्याम् ।

मया—जत्रुदर्शितालपल्लवेन ।

सह—मिलितसूचीमुखाभ्याम् ।

मदनमनोरथ—कांगूलेनस्कन्धदेशात्किंचिदधः समानीतपताक वाम प्रसारितमुष्ट्या कर्णाकृष्टखटकामुखेन कान्तया दृष्ट्या च ।

भावितया—हृद्गतसन्दंशेन ।

साविकारं-अङ्गदर्शितचलद्धंसपक्षेण । अथवा अङ्गादधःसमानीत चल त्रिपताकेन। यद्वा चलत्पताकाभ्यां विधुतशिरसा च ॥

प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ।
मृदुमधुरस्मितभाषितया शिथिलीकृत जघनदुकूलम् ॥२॥

प्रथम–किंचिदधोङ्गुलि पुरस्तलपताकेन ।
समागम–मिलितसूचीमुखाभ्याम् ।
लज्जितया–लज्जितदृष्ट्या ।
पटु–शनैरूर्ध्वगतालपल्लवेन ।
चाटु–अधरात्पुरोगतहंसास्येन । लोलितसंन्दंशेन परिबाहितशिरसा विकोशया दृष्ट्या च ।
शनैः—बाणहस्तकेन ।
अनुकूलं–मिलितसूचीमुखाभ्याम् ।
मृदु–चलदंगुष्ठहंसास्येन ।
शिथिलीकृत–कटिदेशपरिवर्तित कर्तरीमुखाभ्याम् ।
मधुर—कर्णगतहंसास्येन ।
स्मित–प्रसन्नमुखरागेण हास्यदृष्ट्या च ।
भाषितया–अधरात्पुरोगतहंसास्येन ।
जघन–नितम्बहस्तेन ।
दुकूलं–पार्श्वदेशात्पुरः समानीत परस्परसंमुखव्यावर्तित खटका-मुखाभ्याम् ॥ २ ॥

किसलयशयननिवेशितया चिरमुरसिममैव शयानम् ।
कृतपरिरम्भण चुम्बनया परिरभ्य कृताधरपानम् ॥ ३ ॥

किसलय–पल्लवहस्तकेन ।
शयन–स्कंधानतेनशिरसा कपोलगतार्धचन्द्रेण खण्डसूचीस्थानकेन च। अथवा सुप्तस्थानकेन ।
निवेशितया–शनैरधस्तलीकृतपताकेन ।

चिरं-आवेष्टितार्धगतपताकेन आधूतशिरसा च ।

उरसि—हृद्गतसन्दंशेन ।

मम—जत्रुदर्शितालपल्लवेन ।

एव-आवर्तनेन ।

शयानं-स्कन्धानतेनशिरसा कपोलगतार्धचन्द्रेण अथवा सुप्तस्थानकेन।

कृत-अधोमुखहंसास्येन ।

परिरम्भण—उत्सङ्गेन ।

चुम्बनया—अधरसमीपे ऊर्ध्वाधोमुखमुकुलाभ्याम् ।

परिरभ्य—उत्सङ्गेन ।

कृताधरपानं-मुखसमीपे ऊर्ध्वाधोमुखमुकुलाभ्याम् ॥ ३ ॥

अलसनिमीलित लोचनया पुलकावलिललितकपोलम् ।
श्रमजलसिक्त कलेबरया वरमदनमदा दतिलोलम् ॥ ४ ॥

अलसनिमीलित—मुकुलित दृष्ट्या ।

लोचनया—अपाङ्गावर्तित चलत्रिपताकेन ।

पुलकावलि-अङ्गदर्शित चलद्धंसपक्षेण ।

ललित—लोलितालपल्लवेन ।

कपोलं-उत्तानवंचितेन ।

श्रमजल-अङ्गाच्चलदधःसमानीत त्रिपताकेन ।

सिक्त-क्षिप्तांगुलिमुकुलेन ।

कलेवरया—अङ्गदर्शितहंसपक्षेन ।

वर—ऊर्ध्वगतालपल्लवेन ।

मदन-हृद्यावेष्टित चतुरेण । अथवा कांगूलस्कन्धदेशात्किंचिदधः समानीत विरलांगुलिपताक प्रसारित 'वाममुष्टया कर्णाकृष्ट खटकामुखेन कान्तया दृष्टया च ।

मदात् -- मत्तल्याचार्या मदिरया दृष्टया च ।
अति-आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।
लोलं-लोलितालपल्लवेन विकोशया दृष्टया च ॥ ४ ॥

कोकिलकलरव कूजितया जितमनसिजतन्त्रविचारम् ।
श्लथकुसुमाकुलकुन्तलया नखलिखित घनस्तनभारम् ॥

कोकिल-पुरस्तलसन्दंशेन । अथवा तिर्यक्प्रकारित चलत्पुरस्समानीत त्रिपताकेन
कलरव- कर्णगतसूचीमुखेन ।
कूजितया-अधरात्पुरोगतहंसास्येन ।
जित-उद्वेष्टितपताकेन ।
मनसिज-हृद्गतावेष्टित चतुरेण ।
तन्त्रविचारं-विस्तारित चतुरेणोद्वेष्टितावेष्टितेब च ।
श्लथ—शिरोदेशोद्वेष्टित अधोंगुलि कर्तरीमुखेन ।
कुसुम- शिरःपार्श्वेस्थितकांगूलेन ।
आकुल-परस्परान्तर्गलितांगुलिपताकाभ्याम् ।
कुन्तलया-कांगूलेन शिरोदेशाच्चलत्तिर्यक्प्रसारितारालेन ।
नख-नखदर्शितांगुष्ठेन ।
लिखित-उरसि किंचिदाकर्षितोर्णनाभेन ।
घनस्तन-स्वस्तिकीकृतालपल्लवाभ्यां । अथवा हृदिस्वस्तिकीकृतमुकुलाभ्याम् ।
भारं-वक्षःसमीपेशनैरधस्तलीकृत पताकाभ्याम् ॥ ५ ॥

चरणरणित मणिनूपुरया परिपूरित सुरतवितानम् ।
मुखर विश्रृंखलमेखलया सकचग्रह चुम्बनदानम् ॥ ६ ॥

चरण—चरदर्शिणतपताकने ।

रणित–कर्णगतसूचीमुखेन।

मणि–चलत्कांगूलेनाकेकरया दृष्ट्या च।

नूपुरया—गुल्फोपरिभागदर्शितार्धचन्द्रेण।

परिपूरित–अधस्तलमिलितपुरोलोलित पताकाभ्याम्।

सुरतवितानं–उत्संगेनाधरसमीपे ऊर्ध्वाधोमुख मुकुलाभ्यां स्निग्धया दृष्ट्या च।

मुखर–वारं वारं अधरात्पुरोगत हंसास्येन।

विशृंखल—शनैरावर्तित किंचिदूर्ध्वगतपताकेन। अथवा भ्रमद्भ्रमराभ्यां विकोशदृष्ट्या च।

मेखलया—कटिस्थार्धचन्द्राभ्याम्।

सकचग्रह—शिरोदेशात्किंचित्प्रसारितारालेनावर्तनेन कृतमुष्टिना। अथवा केशबन्धेन।

चुम्बनदानं–अधरसमीपे ऊर्ध्वाधोमिलितमुखमुकुलाभ्याम्॥ ६॥

रतिसुखसमयरसालसया दरमुकुलित नयन सरोजम्।
निस्सहनिपतित तनुलतया मधुसूदनमुदित मनोजम्॥७॥

रति–मिलितांगुलितल त्रिपताकाभ्यां। अथवा उत्सङ्गेनाधरसमीपे ऊर्ध्वाधोमुखमुकुलाभ्यां ललितया दृष्ट्या च।

सुख–हृद्गतपताकेन मुकुलया दृष्ट्या च।

समय–अधोंगुलिपुरस्तलपताकेन।

रसालसया–चतुरेण श्रान्तदृष्ट्या च।

दर–ऊर्ध्वमुखकिंचिदाधिक तर्जनीककपित्थेन।

मुकुलित–अर्धमुकुलया दृष्ट्या।

नयन–द्वयदर्शितत्रिपताकेन।

सरोजं–कमलवर्तनया।

निस्सह–दोलहस्तकेन ।

निपतित–उद्वेष्टितकर्तरीमुखेनाङ्गवलितेन च ।

तनु–जत्रुदर्शितालपल्लवेन ।

लतया–लताकेरणाङ्गवलितेन च ।

मधुसूदनं–त्रिभङ्गीस्थानकेन ।

उदित–हृद्गतविकसितमुकुलेन ।

मनोजं–हृद्यावेष्टित चतुरेण । अथवा पार्श्वदेशे किंचिदूर्ध्वदर्शित कांगूलेन तेनैव स्कन्धदेशात्किंचिदधः समानीत विरलांगुलि पताकीकृतेन प्रसारित वाममुष्ट्या कर्णाकृष्टखटकामुखाभ्यां आलीढस्थानकेन कान्तया दृष्ट्या च ॥ ७ ॥

श्री जयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ।
सुखमुत्कण्ठित गोपवधूकथितं वितनोतु सलीलम् ॥ ८ ॥

श्री–ऊर्ध्वगतालपल्लवेनाधूतशिरसा च ।

जयदेव–ललाटस्थांजलिना अवधूत शिरसा च ।

भणितं–अधरात्पुरोगतहंसास्येन च ।

इदं–अधोंगुलि पुरस्तलपताकेन ।

अतिशय–आवेष्टित किंचिदूर्ध्वगतपताकाभ्यां च ।

मधुरिपु–त्रिभङ्गीस्थानकेन ।

निधुवनशीलं–मिलितांगुलि त्रिपताकाभ्याम् । मुकुलया दृष्ट्या च अथवा उत्सङ्गेन ।

सुख–हृद्गतपताकेन मुकुलया दृष्ट्या च ।

उत्कंठित–स्निग्धया दृष्ट्या ।

गोप–गोमुखेनोर्ध्वभ्रामितसूचीमुखेन ।

वधु–आकर्षितांचलखटकामुखेन परावृत्तने शिरस ।

कथितं—अधरात्पुरोगतहंसास्येन ।

वितनोतु—विस्तारितोर्ध्वतलपताकाभ्याम् ।

सलीलं—लोलितालपल्लवेन परिवाहितेन शिरसा ॥ ८ ॥

कंसारिरपि संसार वासनाबद्धशृङ्खलाम् ।
राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥

कंसारिः—त्रिभङ्गीस्थानकेन ।

अपि—आवर्तनेन ।

संसार—अधस्थितशनैरूर्ध्वानीत सन्दंशाभ्याम् ।

वासना—हृद्गतसन्दंशेन ।

बद्ध—आवर्तनेन कृतमुष्टिना ।

शृङ्खलां—मिलितांगुलितलताम्रचूडाभ्याम् ।

राधां—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

आधाय—शनैरधस्तलीकृतपताकेन ।

हृदये—हृद्गतसन्दंशेन । अथवा आधायहृदये—हृत्समीपे शनैरधस्तली कृतपताकेन ।

तत्याज—बहिः क्षिप्तांगुलि त्रिपताकेन ।

व्रजसुन्दरीः—ऊर्ध्वतलविस्तारितपताकाभ्यां स्वस्तिकीकृतपद्मकोशाभ्यां च ॥

इतस्ततस्तामनुसृत्यराधिकां अनङ्गबाणव्रणखिन्न मानसः ।
कृतानुतापः सकलिन्दनन्दिनी तटान्तकुञ्जे विषसाद माधवः ॥

इतस्ततः—इतस्ततो दर्शितसूचीमुखेन ।

तां—पार्श्वगतसूचीमुखेन ।

अनुसृत्य—अधोंगुलितिर्यग्गतागत मृगशीर्षेण । अथवा इतस्ततस्तिर्यग्गताचार्यो ऊर्ध्वतलमृगशीर्षेण च ।

राधिकां—स्वस्तिकीकृत पद्मकोशाभ्यां आकर्षितांचल खटकामुखेन
परावृत्तेन शिरसा ।

अनङ्ग—हृद्यावेष्टितचतुरेण ।

बाण—पुरस्तल विरलांगुलिपताक वामप्रसारितमुष्टि दक्षिणकर्णाकृष्ट
खटकामुखाभ्याम् ।

व्रण—हृदि द्वित्रिवारं दर्शित शिखरेण ।

खिन्नमानसः—लोलितशिरसा हृद्गतसन्दंशेन ग्लानदृष्ट्या च ।

कृत—अधोमुखहंसास्येन ।

अनुतापः—हृद्युद्वेष्टितचतुरेण अभितप्तया दृष्ट्या च ।

सः—पार्श्वगतसूचीमुखेन ।

कलिन्दनन्दिनी—ऊर्ध्वभ्रामितसूचीमुखात् चलदधःसमानीत त्रि·
पताकेन तेनैवपुरःप्रसारितेन च ।

तटान्तकुञ्जे—चलत्पुरःप्रसारित त्रिपताकाभ्यां । चलदूर्ध्वगत
त्रिपताकाभ्यां । ऊर्ध्वमिलितमुखमृगशीर्षाभ्यां च ।

विषसाद-विषण्णया दृष्ट्या च अङ्गवलितेन ।

माधवः—त्रिभङ्गीस्थानकेन ॥

हृदिबिसलताहारो नायं भुजङ्गमनायकः
कुवलयदललश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहितेमयि
प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधाकिमुधावसि ॥

हृदिं—हृद्गतपताकेन ।

बिसलता—कमलवर्तनया चलदधः समानीतभ्रमरेण ।

हारः— स्कन्धदेशाच्चलन्नाभिपर्यान्तानीतखटकामुखाभ्याम् ।

न—पुरस्तलकंपितपताकेन ।

अर्थं—हृदितिर्यग्दर्शितपताकेन ।

भुजङ्गमनायकः—लोलितसर्पशीर्षेण ।

कुवलय—कमलवर्तनया ।

दल—चतुरेण ।

श्रेणी—विस्तारित चतुरेण ।

कण्ठे—कण्ठवलयित चलत्सन्दंशेन ।

न–पुरस्तलकम्पितपताकेन ।

सा—पार्श्वगतसूचीमुखेन ।

गरलद्युतिः—सर्पशीर्षाच्चलदधः समानीत त्रिपताकेन ।

मलयजरजः—परावर्तितमुष्टिभ्यां अङ्गलेपितहंसपक्षेण ।

न–पुरस्तलकम्पितपताकेन ।

इदं–अङ्गाभिमुखावर्तितपताकेन ।

भस्म–अधोमुखचलितसन्दंशेन ।

प्रिया–अधस्तलसर्पशीर्षेण । हृद्गतपताकेन च ।

रहिते—वियुक्तसूचीमुखाभ्याम् ।

मयि–जत्रुदर्शितालपल्लवेन ।

प्रहर–स्कन्धदेशात्तिर्यग्गतपताकेन ।

न–पुरस्तलकम्पितपताकेन ।

हर–शैवस्थानकेन ।

भ्रान्त्या–विभ्रांतया दृष्ट्या ।

अनङ्ग–हृद्यावेष्टित चतुरेण ।

क्रुधा–क्रुद्धया दृष्ट्या ।

किमु—ऊर्ध्वतललोलितपताकेन ।

धावसि–द्रुतगत्या ॥

पाणौ मा कुरु चूतसायकममुं माचाप मारोपय
क्रीडानिर्जितविश्व मूर्छितजनाघातेन किं पौरुषम् ।
तस्या एव मृगीदृशो मनसिज प्रेंखत्कटाक्षाशुग
श्रेणीजर्जरितं मनागपि मनो नाद्यापि सन्धुक्षते ॥

पाणौ—करदर्शितपताकेन ।

मा— पुरस्तल कम्पितपताकेन ।

कुरु—अधोमुखहंसास्येन ।

चूत—पल्लवहस्तकेन ।

सायकं—वामप्रसारितमुष्टि दक्षिणकर्णाकृष्टखटकामुखाभ्याम् ।

अमुं—अधोंगुलिपुरस्तलदर्शितपताकेन ।

मा—पुरस्तलकम्पितपताकेन ।

चापमारोपय—वामप्रसारितमुष्टि दक्षिणाकृष्टखटकामुखाभ्यां आलीढ स्थानकेन ।

क्रीडा—परस्परसम्मुखतया व्यावर्तित परावर्तित हंसास्यालपल्लवाभ्याम् ।

निर्जित—उद्वेष्टित पताकेन ।

विश्व—विस्तारितोर्ध्वतलपताकाभ्याम् ।

मूर्छित—अंचितेन शिरसा ग्लानदृष्ट्या च ।

जन—विस्तारितोर्ध्वतलपताकेन ।

आघातेन—स्कन्धदेशात्तिर्यग्गताधस्तलपताकेन ।

किं—विच्युतसन्दंशेन ।

पौरुषं—स्कन्धदेशे लोलितपताकेन वीरदृष्ट्या च ।

तस्याः—पार्श्वगतोर्ध्वमुखसूचीमुखेन ।

एव—ऊर्ध्वतलमृगशीर्षेण ।

मृगीदृशः—मृगशीर्षेणापांगावर्तित चतुरेण ।

मनसिज-हृद्यावेष्टित चतुरेण ।

प्रेंखत्—चलत्रिपताकेन ।

कटाक्ष—कटाक्षेण ।

आशुग—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्याम् ।

श्रेणी—अधोमुखतिर्यग्गतागतमृगशीर्षेण ।

जर्जरितं—ऊर्ध्वमुखस्थित. वियुक्तसूचीमुखाभ्याम् । अथवा पुनःपुन
रुरोवर्तितांगुष्ठ शिखरेण ।

मनागपि—ऊर्ध्वमुखकिंचिदधिकतर्जनीककपित्थेन ।

मनो—हृद्गतसन्दंशेन ।

न—पुरस्तलकम्पितपताकेन ।

अद्यापि—ऊर्ध्वतलमृगशीर्षेण ।

सन्धुक्ष्यते—हृद्गत विकसितमुकुलेन ॥

---

## अष्टपदी ७

मामियं चलिता विलोक्य वृतं वधूनिचयेन ।
सापराधतया मया न निवारितातिभयेन ॥ १ ॥

मां-जत्रुदर्शितालपल्लवेन ।

इयं—अधांगुलिपुरस्तलपताकेन ।

चलिता—तिर्यग्गतोर्ध्वतलमृगशीर्षेण ।

विलोक्य—अपाङ्गावर्तित त्रिपताकेन ।

वृतं-मण्डलाकार भ्रामित सूचीमुखाभ्यां । अथवा पार्श्वदेशात्पुरः
समानीत परस्पर सम्मुखाधस्तलार्धचन्द्राभ्याम् ।

वधू—शिरस्याकर्षितांचलखटकामुखेन परावृत्तेन शिरसा । अथवा
स्वस्तिकीकृतपद्मकोशाभ्याम् ।

निचयेन-आवर्तनेन कृतमुष्टिना ।

सापराधतया—अवधूतेनशिरसा हृदिस्थांजलिना त्रस्तया दृष्ट्या च ।

मया—जत्रुदर्शितालपल्लवेन ।

अपि—आवर्तनेन ।

न-पुरस्तलकम्पितपताकेन ।

वारिता-उद्वेष्टितपताकेन ।

अति-आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।

भयेन—त्रस्तया दृष्ट्या । विधुत शिरसा च ॥ १ ॥

हरहर हतादरतया । सागता कुपितेव ॥

हरहर—विषण्णयादृष्ट्याङ्कवलितेनांचितेन शिरसा ।

हतादरतया-बहिः क्षिप्तांगुलिद्वय त्रिपताकेनावर्तित. किंचिदूर्ध्वगत पताकेन ।

सा-पार्श्वगतसूचीमुखेन ।

गता—ऊर्ध्वतलतिर्यग्गतमृगशीर्षेण ।

कुपिता—क्रुद्धया दृष्ट्या उरोदेशाचलदूर्ध्वसमानीतत्रिपताकेनोद्वाहित शिरसा च ।

इव-आवर्तनेन ॥

किं करिष्यति किं वदिष्यति साचिरं विरहेण ।
किं धनेन जनेन किं मम जीवितेन सुखेन ॥ २ ॥

किं-ऊर्ध्वतललोलितपताकेन ।

करिष्यति-शनैरधोमुखीकृतहंसास्येन ।

किं—ऊर्ध्वतललोलितपताकेन ।

वदिष्यति-अधरात्पुरोगतहंसास्येन ।

सा—प

चिरं—आवेष्टितोर्ध्वगतपताकेन ।
विरहेण-वियुक्तसूचीमुखाभ्याम् ।
किं-विच्युत कपित्थेन ।
घनेन—अधोमुखचालितमुकुलेन कपोतेन च ।
जनेन—विस्तारितोर्ध्वतलपताकेन ।
किं—विच्युत कपित्थेन ।
मम—अनुदर्शितालपल्लवेन ।
जीवितेन—हृद्गतविकासितमुकुलेन ।
सुखेन—हृद्गतपताकेन मुकुलया दृष्ट्या च ॥ २ ॥

चिन्तयामि तदाननं कुटिलभ्रु रोषभरेण ।
शोणपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ ३ ॥

चिन्तयामि—हृद्गतसन्दंशेन मुकुलया दृष्ट्या च ।
तत्—पार्श्वगतसूचीमुखेन ।
आननं—हनोरधावर्तितालपल्लवेन ।
कुटिलभ्रु—ताम्रचूडेनोत्क्षिप्तया भ्रुवा ।
रोषभरेण—क्रुद्धया दृष्ट्या । उरोदेशाचलदूर्ध्वसमानीत त्रिपताकेनो द्वाहित शिरसा च ।
शोणपद्मं—अधोमुखमर्दित सन्दंशेन कमलवर्तनया च ।
इव—आवर्तनेन ।
उपरि—शनैरधस्तलीकृतपताकेन ।
भ्रमताकुलं भ्रमरेण—भ्रमत् भ्रमराभ्याम् ॥ ३ ॥

तामहं हृदि सङ्गतामनिशं भृशं रमयामि ।
किं वनेनुसरामि तामिह किं वृथा विलपामि ॥ ४ ॥

तां—पार्श्वगतसूचीमुखेन ।

अहं–जत्रुदर्शितालपल्लवेन ।

हृदि–हृद्गतसन्दंशेन ।

सङ्गतां–मिलितसूचीमुखाभ्याम् ।

अनिशं–वारंवारमावेष्टित पताकेन ।

भृशंरमयामि–आवेष्टित किंचिदूर्ध्वगतपताकेन मिलितांगुलितल त्रिपताकाभ्यां च । अथवा उत्सङ्गेन ।

किं–ऊर्ध्वतललोलितपताकेन ।

वने–चलदूर्ध्वगतत्रिपताकाभ्यां स्वस्तिकीकृतपल्लवाभ्यां विस्तारितोर्ध्व तलपताकाभ्यां च ।

अनुसरामि–अधोंगुलिचलत्पुरःप्रसारितेन पताकेन ।

तां–पार्श्वगतसूचीमुखेन ।

इह–ऊर्ध्वतलमृगशीर्षेण ।

किंवृथा–विच्युत कपित्थेन ।

विलपामि–नेत्रादधश्चलत्समानीत त्रिपताकेन ॥ ४ ॥

तन्वि खिन्नमसूयया हृदयं तवाकलयामि ।
तन्नवेद्मि कुतो गतासि न तेन तेऽनुनयामि ॥ ५ ॥

तन्वि–हृद्गतपद्मकोशाभ्याम् ।

खिन्नं–अंचितेन शिरसा हनुगतार्धचन्द्रेण विषण्णया दृष्ट्या च ।

असूयया–क्रुद्धया दृष्ट्याऽवर्तित करणेन च ।

हृदयं–हृद्गतसन्दंशेन ।

तव–अधस्तलसर्पशीर्षं प्रतिदर्शितपताकेन ।

आकलयामि–हृद्गतावेष्टित चतुरेण ।

तत्–पार्श्वगतसूचीमुखेन ।

न–पुरस्तललोलितपताकेन ।

वेद्मि–हृद्गतसन्दंशेन ।

कुतः—ऊर्ध्वतललोलित चतुरेण ।

गतासि—शनैस्तिर्यगावेष्टित पताकेन ।

न—पुरस्तललोलितपताकेन ।

तेन—तिर्यग्दर्शितसूचीमुखेन ।

ते—अधस्तलसर्पशीर्षप्रतिदर्शितपताकेन ।

अनुनयामि—अधोदेशाल्ललाटपर्यन्तानीत त्रिपताकेन । अथवा अधरात्पुरोगतहंसास्येन हृद्गतपताकेन च । अथवा शनैरधस्तलीकृतपताकेन ॥ ५ ॥

दृश्यसे पुरतो गतागतमेव मेविदधासि ।
किं पुरेव ससंभ्रमं परिरंभणं न ददासि ॥ ६ ॥

दृश्यसे—त्रिकोशया दृष्ट्या ।

पुरतो—पुरोदेशदर्शितपताकेन ।

गतागतं—पुरःप्रसारिताधोंगुलिपताकेनाकर्षित मृगशीर्षेण च । अथवा शनैस्तिर्यक्चालितमृगशीर्षेण ।

एव—ऊर्ध्वतलमृगशीर्षेण ।

मे—जत्रुदर्शितालपल्लवेन ।

विदधासि–अधोमुखहंसास्येन ।

किं—ऊर्ध्वतललोलितपताकेन ।

पुरा—आवेष्टितोर्ध्वगतपताकेन ।

इव—आवर्तनेन ।

ससंभ्रमं—पार्श्वलोलितदोलहस्तकेन । अथवा निर्हंचित. शिरसा ।

परिरम्भणं—उत्सङ्गेन ।

न—पुरस्तलकंपितपताकेन । नानिषेधे ।

ददासि—अधोमुखमुकुलेन, अथवा,
परिरम्भणंनददासि—उत्सङ्गेनोद्वेष्टिपताकेन ॥ ६ ॥

क्षम्यतामपरं कदापि तवेदृशं नकरोमि ।
देहि सुन्दरिदर्शनं मम मन्मथेन दुनोमि ॥ ७ ॥

क्षम्यतां—हृदिस्थांजलिनावधूतेन शिरसा ।
अपरं—तिर्यग्दर्शित सूचीमुखेन ।
कदापि—ऊर्ध्वतलमृगशीर्षेण ।
तव—अधस्तलसर्पशीर्षं प्रतिदर्शितपताकेन ।
ईदृशं—पार्श्वे अधोंगुलिपताकेन ।
न करोमि—पुरस्तलकम्पितपताकेनाधोमुखहंसास्येन च ।
देहि—ऊर्ध्वतलसर्पशीर्षेण ।
दर्शनं—दृगंचलावर्तित त्रिपताकेन ।
मम—जत्रुदर्शितालपल्लवेन ।
मन्मथेन—हृद्यावेष्टित चतुरेण ।
दुनोमि—विषण्णया दृष्ट्या ॥ ७ ॥

वर्णितं जयदेवकेन हरेरिदं प्रणतेन ।
किन्दु बिल्वसुमुद्र सम्भव रोहिणीरमणेन ॥ ८ ॥

वर्णितं—अधरात्पुरोगतहंसास्येन ।
जयदेवकेन—शिरस्थांजलिनावधूतेन शिरसा च ।
हरेः—त्रिभङ्गीस्थानकेन ।
इदं—अधोंगुलिपुरोदेशदर्शितपताकेन ।
प्रणतेन—अवधूतेन शिरसा ललाटस्थांजलिना ।
किन्दु बिल्वसमुद्र—विस्तारितोर्ध्वतलपताकाभ्याम् ।
सम्भव—अधोभागादूर्ध्वसमानीतालपल्लवेन ।
रोहिणीरमणेन-ऊर्ध्वस्थितार्धचन्द्रेण ॥ ८ ॥

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथाम् ।
श्यामात्मा कुटिलः करोति कबरी भारोपि मारोद्यमम्।
मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवान्
सद्वृत्तंस्तनमण्डलं तव कथं प्राणैर्मम क्रीडति ॥ २२ ॥

भ्रू—भ्रूदर्शितारालेन ।

चापे—पुरःप्रसारितमुष्ट्या क्रर्णाकृष्टखटकामुखेन ।

निहितः—शनैरधस्तलीकृतपताकेन ।

कटाक्ष—कटाक्षेण ।

विशिखः—पुरःप्रसारिताकर्णाकृष्टखटकामुखाभ्याम् ।

निर्मातु—आवेष्टित किञ्चिदूर्ध्वतलपताकेन ।

मर्मव्यथां—हृद्दर्शित शिखरेणाधोमुखेन शिरसा अभितप्तया दृष्ट्या च

श्यामात्मा—ऊर्ध्वविस्तारित सन्दंशेनोर्ध्वाधोनीत सन्दंशाभ्याम् ।

कुटिलः—शिरस्तश्चलदधोगतारालेन ।

कबरीभारः—केशबन्धेन ।

अपि-आवर्तनेन ।

मारोद्यमं—स्कन्धदेशात्तिर्यग्गताधोमुखपताकेनवीरदृष्ट्या च। अथवा हृद्यावेष्टित चतुरेण विकसितमुकुलेन कान्तया दृष्ट्या च ।

मोहं—लोलितेन शिरसा मदिरया दृष्ट्या च ।

तावत्—पुरोवर्तितपताकेन ।

अयंच—पुरस्तल दर्शितपताकेन ।

तन्वि—ऊर्ध्वतललोलितसूचीमुखेन स्वस्तिकीकृतपद्मकोशाभ्यां च ।

तनुतां—विस्तारितोर्ध्वतलपताकेन ।

बिम्बाधरः—अधरोपरिचालित सन्दंशेन ।

रागवान्—चालितांगुष्ठसन्दंशेन मीलितसूचीमुखाभ्यां च ।

सद्वृत्त—लोलितालपल्लवेन । अथवा किञ्चित्कुंचितांगुलिकपोतेन ।
स्तनमण्डलं—स्वस्तिकीकृतकोशाभ्याम् ।
तव—अधस्तलसर्पशीर्षं प्रातिदर्शितपताकेन ।
कथं—ऊर्ध्वतललोलितपताकेन ।
प्राणैः—हृद्गतसन्दंशेन ।
मम–हृद्गतपताकेन ।
क्रीडति—क्षिप्ताक्षिप्तकरणेन परस्परव्यावर्तित हंसास्याभ्यां च ॥

तानिस्पर्शसुखानि ते च तरलस्निग्धा दृशो विभ्रमाः
तद्वक्त्राम्बुजसौरभंस च सुधास्यन्दी गिरां वक्रिमा ।
सा बिम्बाधर माधुरीति विषयासङ्गेपि चेन्मानसम्
तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्धते॥

तानि—तिर्यगूर्ध्वदर्शितसूचीमुखेन ।
स्पर्श—अङ्गलग्नपताकेन ।
सुखानि–हृद्गतपताकेन मुकुलया दृष्ट्या च ।
तेच—तिर्यग्दर्शितसूचीमुखेन ।
तरलास्निग्धादृशोविभ्रमाः—स्निग्धया दृष्ट्या ।
तत्—पार्श्वगतसूचीमुखेन ।
वक्त्राम्वुज—हनोरधावर्तितालपल्लवेन कमलवर्तनया च ।
सौरभं—नासागतहंसास्येनोद्वाहितोरसा च ।
सच—पार्श्वगतसूचीमुखेन ।
सुधास्यन्दी—अर्धचन्द्राचलदधः समानीत त्रिपताकेन ।
गिरांवक्रिमा–अधरात्पुरोगतहंसास्येन लोलितसन्दंशेन च ।
सा—पार्श्वगतसूचीमुखेन ।
बिम्बाधर–कांगूलेन मिलितसूचीमुखाभ्यां अधरोपरिचालितसन्दंशेन।

माधुरी—हंसास्येन ।
इति—आवर्तनेन ।
विषयासङ्गेपि—मिलितसूचीमुखेन ।
चेत्—आवर्तनेन ।
मानसं—हृद्गतसन्दंशेन ।
तस्यां—पार्श्वगतसूचीमुखेन ।
लग्न-मिलिताग्रसूचीमुखाभ्याम् ।
समाधि—हृद्गतसन्दंशेन मुकुलया दृष्ट्या च ।
हन्त—विषण्णया दृष्ट्या धुत शिरसा च ।
विरह—विमुक्तसूचीमुखाभ्याम् ।
व्याधिः—लोलितं शिरसा अभितप्तया दृष्ट्या च ।
कथं-लोलितपताकेन ।
वर्धते—अधस्थितोर्ध्वगतालपल्लवेनाधूत शिरसा च ॥ २३ ॥

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
बाणा गुणः श्रवणपालिरिति स्मरेण ।
तस्यामनङ्गजयजङ्गमदेवताया
मस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ २४ ॥

भ्रू—भ्रूदर्शितारालेन ।
पल्लवं—पल्लवहस्तकेन ।
धनुः—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्याम् ।
अपाङ्ग—अपङ्गावर्तितत्रिपताकेन
तरङ्गितानि—परस्परानुगच्छचलदंगुल्यूर्ध्वाधस्तलपताकाभ्याम् ।
अथवा अपाङ्गतरङ्गितानि—कटाक्षेण ।
बाणाः—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्याम् ।

गुणः—चलदधःसमानीत सन्दंशेन ।
श्रवणपालिः—कर्णदर्शित त्रिपताकेन ।
इति—आवर्तनेन ।
स्मरेण—हृद्यावेष्टित चतुरेण कान्तया दृष्टया च ।
तस्यां—पार्श्वगतसूचीमुखेन ।
अनङ्ग—हृद्यावेष्टितचतुरेण ।
जय—उद्वृत्तहस्तकेन ।
जङ्गमदेवतायां—हंसगत्या स्वस्तिकीकृतपद्मकोशाभ्यां शिरस्थांजलिना अवधूतशिरसा च ।
अस्त्राणि—पुरस्तलविरलांगुलि पताकेन वामप्रसारितमुष्टिदक्षिणाकृष्ट खटकामुखाभ्याम् ।
निर्जित—उद्वेष्टितपताकेन ।
जगन्ति—पुरस्तलपुरोदेशदर्शितपताकेनोर्ध्वतलभ्रामितसूचीमुखेन च ।
किं—आवर्तनेन ।
अर्पितानि—किञ्चिदधोंगुलिपुष्पपुटेन ॥ २४ ॥

इति मामियं समाप्ता ।

—:—

इति श्री गीतगोविन्दे तृतीयः सर्गः ॥ ३ ॥

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
प्राह प्रेमरसोद्भ्रान्तं माधवं राधिकासखी ॥ २५ ॥

यमुना—ऊर्ध्वभ्रामितसूचीमुखाच्चलदधःसमानीतात्रिपताकेन तेनैव पुरः प्रसारितेन ।
तीर—चलत्पुरःप्रसारितत्रिपताकाभ्याम् ।
वानीर—चलदूर्ध्वगतात्रिपताकेन ।
निकुञ्जे—ऊर्ध्वमिलितमुखमृगशीर्षाभ्याम् ।

मन्दं—हृद्दर्शितसन्दंशेनोद्वेष्टितपताकेन च ।

आस्थितं—शनैरधस्तलीकृतपताकेन ।

प्राह—अधरात्पुरोगतहंसास्येन ।

प्रेम—हृद्गतपताकेन ।

रस—चतुरेण ।

उद्भ्रान्तं--विभ्रान्तया दृष्ट्या च ।

माधवं—त्रिभङ्गीस्थानकेन ।

राधिका—आकर्षितांचलखटकामुखेन परावृत्तेन सिरसा ।

सखी—अधस्तलसर्पशीर्षेण हृद्गतपताकेन च ॥ २५ ॥

## अष्टपदी ८

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरम् ।
व्यालनिलयमिलनेनगरलमिव कलयति मलयसमीरम् ॥

निन्दति—अधरात्पुरः क्षिप्तकपित्थेन ।

चन्दन—परावर्तितमुष्टिभ्यां अङ्गलेपितहंसपक्षेण अवधूतशिरसा च ।

इन्दु—उपरितिर्यग्दर्शितार्धचन्द्रेणोत्क्षिप्तशिरसा च ।

किरणं—तदधोभागे चलदधःसमानीतत्रिपताकेन ।

अनुविन्दति—म्लानमुखरागेण दीनदृष्ट्या हृद्गतसन्दंशेन च ।

खेदं—अंचितेन शिरसा कपोलगतार्धचन्द्रेण ।

अधीरं—चलत्पताकेन ।

व्याल—सर्पशीर्षेण ।

निलय—मिलिताग्रमृगशीर्षाभ्याम् ।

मिलनेन—मिलितसूचीमुखाभ्याम् ।

गरलं—सर्पशीर्षाचलदधोगत त्रिपताकेन ।

इव—आवर्तनेन ।

कलयति—हृद्गतावेष्टितचतुरेण शंकितदृष्ट्या च ।

मलयसमीरे—ऊर्ध्वस्थितालपल्लवेन तदुपरितिर्यक्चलत्पुरःसमानीत त्रिपताकेन ॥ १ ॥

सा विरहे तव दीना ।

माधव मनसिजविशिखभयादिव भावनया त्वयिलीना ॥

सा—पार्श्वगतसूचीमुखेन ।

विरहे—वियुक्तसूचीमुखाभ्याम् ।

तव—पुरःप्रसारितोर्ध्वतलपताकेन ।

दीना—दीनदृष्ट्या । म्लानमुखरागेण हृद्गतपुष्पपुटेन ।

माधव—त्रिभङ्गीस्थानकेन ।

मनसिज—हृद्गतावेष्टितचतुरेण ।

विशिख—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्याम् ।

भयात्—विधुतेनशिरसा चलत्पताकाभ्यां त्रस्तया दृष्ट्या च ।

इव—आवर्तनेन ।

भावनया—हृद्गतसन्दंशेन मुकुलया दृष्ट्या च ।

त्वयि—पुरःप्रसारितोर्ध्वतलपताकेन ।

लीना—शनैर्मिलितकपोतेन लीनकरणेन च ॥

अविरलनिपतित मदनशरादिव भवदवनाय विशालम् ।

स्वहृदयमर्मणि वर्म करोति स जलनलिनीदल जालम् ॥

अविरल—पुरस्तलमिलितांगुलिपताकाभ्याम् ।

निपतित—परिवर्तनेनाधस्तलीकृतपताकेन ।

मदन—हृद्गतावेष्टितचतुरेण ।

शरात्—कांगूलेन स्कन्धदेशात् किंचिदधःसमानीत पुरस्तल विरलांगुलि पताकेन वामप्रसारितमुष्टिदक्षिणाकृष्टखटकमुखाभ्याम् ।

इव—आवर्तनेन ।

भवत्—पुरःप्रसारितोर्ध्वतलपताकेन ।

अवनाय—पुरस्थांगुल्युपस्थांगुलि स्वसम्मुखपताकाभ्याम् ।

विशालं—विस्तारितपताकाभ्याम् ।

स्व—जत्रुदर्शितालपल्लवेन ।

हृदय—हृद्गतसन्दंशेन ।

मर्मणि—स्तनास्थित शिखरेण ।

वर्म— हृत्सम्मुखलग्नांगुलिमृगशीर्शभ्याम् ।

करोति—अधोमुखहंसास्येन ।

स—मिलितसूचीमुखाभ्याम् ।

जल—उपरिस्थविश्लिष्टअधोंगुलिपताकाभ्याम् ।

नलिनी—कूपंलवर्तनया ।

दल—चतुरेण ।

जालं—आवर्तनेन कृतमुष्टिना ॥ २ ॥

कुसुम विशिखशरतल्पमनल्पविलासकला कमनीयम् ।
व्रतमिव तव परिरम्भसुखाय करोतिकुसुमशयनीयम् ॥ ३ ॥

कुसुम—कांगूलेन ।

विशिख—विश्लिष्टांगुलिपुरस्तलपताकेन ।

शर—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्यां सूचनया दृष्ट्या च

तल्पं—स्वस्तिकीकृताधोविस्तारितपताकाभ्याम् ।

अनल्पं—आवर्तितकिञ्चिदूर्ध्वगतपताकाभ्याम् ।

विलास—समपादचार्या दोलहस्तकेन ।

कला—परस्पर सम्मुखावर्तितपरिवर्तित हंसास्याभ्यां। अथवा निहंचितेन शिरसा ।

कमनीयं—प्रत्येकंपुरस्तिर्यक्प्रसारित लोलितालपल्लवाभ्याम् ।

व्रतं—हृद्गतसन्दंशेन ।

इव—आवर्तनेन ।

तव—पुरःप्रसारितोर्ध्वतलपताकेन ।

परिरंभ—उत्सङ्गेन ।

सुखाय—हृद्गतपताकेन मुकुलदृष्ट्या च ।

करोति—अधोमुखहंसास्याभ्याम् ।

कुसुम—कांगूलेन ।

शयनीयं—कपोलगतार्धचन्द्रस्कन्धानतेनशिरसा प्रसारितस्थानकेन ॥

वहति च गलित विलोचनजलधरमाननकमलमुदारम् ।
विधुमिव विकट विधुन्तुददन्तदलितगलितामृतधारम् ॥४॥

वहति—स्कन्धगतालपल्लवेन ।

च—कपित्थेन ।

गलित—नयनादधोगतचलत्रिपताकेन ।

विलोचन—अपाङ्गावर्तितत्रिपताकेन ।

जलधरं—किंचिल्लोलितनयनगतचतुराभ्यां । करुणया दृष्ट्या च ।
अथवा ऊर्ध्वस्थितविरलांगुलि अधोंगुलिपताकाभ्याम् ।

आननकमलं—हनोरधावर्तितालपल्लवेन कमलवर्तनया च ।

उदारं—लोलितालपल्लवेन ।

विधुं—ऊर्ध्वतिर्यक्प्रसारितार्धचन्द्रेण ।

इव—आवर्तनेन ।

विकटविधुन्तुद—ऊर्णनाभोपरि ऊर्णनाभेन ।

दन्त—अधरसमीपे लोलितसन्दंशेन ।

दलित—अर्धचन्द्रलग्नताम्रचूडेन अथवा

दलितगलितामृतधारं—अर्धचन्द्रलग्नताम्रचूडेन तेनैव चलदधः समानीत त्रिपताकेन ॥ ४ ॥

विलिखति रहसि कुरङ्गमदेन भवन्तं असमशरभूतम् ।
प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ ५ ॥

विलिखति—पताकोपरिचलत्खटकामुखेन ।
रहसि—ऊर्ध्वमुखसूचीमुखेन ।
कुरङ्गमदेन—मृगशीर्षादधःसमानीत चलत्रिपताकेन ।
भवन्तं—पुरःप्रसारितोत्तानपताकेन ।
शर—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकमुखाभ्याम् ।
भूतं—शनैरधस्तलीकृतपताकेन ।
प्रणमति—ललाटस्थांजलिना ।
मकरं—मकरहस्तकेन ।
अधः—अधोंगुलिपताकेन ।
विनिधाय—उद्वेष्टिताधस्तलपताकेन ।
करे—करदर्शितपताकेन ।
च—आवर्तनेन ।
शरं—वामप्रसारितमुष्टिदक्षिणाकृष्टखटकामुखाभ्याम् ।
नवचूतं—किंचिदधिकतर्जनीक ऊर्ध्वमुखकपित्थेन पल्लवेन च ॥ ५ ॥

ध्यानलयेन पुरः परिकल्प्य भवन्तमतीवदुरापम् ।
विलपति हसति विषीदति रोदिति चंचति मुञ्चतितापम् ॥६॥

ध्यानलयेन—मुकुलया दृष्ट्या हृद्गतसन्दंशेन ।
पुरः—पुरोदर्शितपताकेन ।

परिकल्प्य–शनैरूर्ध्वाधोमुखसन्दंशाभ्याम् ।

भवन्तं–पुरःप्रसारितोर्ध्वतलपताकेन ।

अतीव–आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।

दुरापं–पुरस्तललोलितपतकावर्तनेन कृतमुष्टिना ।

विलपति–विषण्णया दृष्ट्या म्लानमुखरागेणाऽधरात्पुरोगतहंसास्येन च ।

हसति—प्रसन्नमुखरागेण हास्यदृष्ट्या च ।

विषीदति–अधोमुखशिरसाङ्गवलितेन ।

रोदिति–लोचनादधश्चलत्त्रिपताकेन करुणया दृष्ट्या च ।

चंचति–हृद्गतविकासितमुकुलेन ।

मुञ्चति–विच्युतमुष्टिना ।

तापं–चलदूर्ध्वगतपताकाभ्याम् ॥ ६ ॥

प्रतिपदमिदमपि निगदति माधव तव चरणे पतिताहम् ।
त्वयि विमुखेमयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥७॥

प्रतिपदं—चतुरात्पुरोगच्छच्चतुरेण ।

इदं—पुरोदेशदर्शितपताकाभ्याम् ।

अपि–आवर्तनेन ।

निगदति–अधरात्पुरोगतहंसास्येन ।

माधव–त्रिभङ्गीस्थनकेन ।

तव—पुरःप्रसारितोर्ध्वतलपताकेन ।

चरणे–चरणदर्शितपताकेन ।

पतिता–ललाटस्थांजलिनाऽवधूतशिरसा च ।

अहं–जत्रुदर्शितालपल्लवेन ।

त्वयि-पुरःप्रसारितोर्ध्वतलपताकेन ।

विमुखे-परावृत्तेन शिरसा ।

मयि—हृद्गतपताकेन ।

सपदि-क्षिप्तकपित्थेन ।

सुधानिधिः—तिर्यगूर्ध्वस्थितार्धचन्द्रेण ।

अपि—आवर्तनेन ।

तनुते-पुरःप्रसारिततिर्यग्गतपताकेन ।

तनुदाहं—चलदङ्गुल्याङ्गदर्शित विश्लिष्टांगुलिपताकाभ्याम् ॥ ७ ॥

श्री जयदेव भणितामिदमाधिकं यदि मनसा नटनीयम् ।
हरि विरहाकुलवल्लवयुवतिसखीवचनं पठनीयम् ॥८॥

श्री—शनैरूर्ध्वगतालपल्लवेन ।

जयदेव-ललाटस्थांजलिना ।

भणितं-अधरात्पुरोगतहंसास्येन ।

इदं—पुरोदर्शितपुरस्तलपताकेन ।

अधिकं—आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।

यदि—आवर्तनेन ।

मनसा-हृद्गतसन्दंशेन ।

नटनीयं—लोलितालपल्लवाभ्याम् ।

हरि-त्रिभङ्गीस्थानकेन ।

विरह-वियुक्तसूचीमुखाभ्याम् ।

आकुल-अङ्गवलितैः ।

वल्लवयुवति-गोमुखभ्रामितोर्ध्वमुखसूचीमुखेन शिरस्थालपल्लवेन। कर्षितांचलखटकामुखेन परावृत्तेन शिरसा ।

सखि-अधस्तलस्पर्शशीर्षेण ।

वचनं-अधरात्पुरोगतहंसास्येन ।

पठनीयं-अधरात्पुरोगतहंसास्येन ॥ ८ ॥

क्षणमपि विरहः पुरा न सेहे
नयननिमीलन खिन्नया यया ते ।
श्वसिति कथमसौ रसालशाखां
चिरविरहेपि विलोक्य पुष्पिताग्राम् ॥

क्षणं-विच्युतकपित्थेन ।

अपि—आवर्तनेन ।

विरहः—वियुक्तसूचीमुखाभ्याम् ।

पुरा-शनैरावेष्टितोर्ध्वगतपताकेन ।

न-पुरस्तलकम्पितपताकेन ।

सेहे-अङ्गसमीपे शनैरधस्तलीकृतपताकेन

नयन निर्मीलन-मीलन निमेषेण ।

खिन्नया-विषण्णयादृष्टयाङ्गवलितेन च ।

यया—पार्श्वगतसूचीमुखेन ।

ते-पुरस्तल दर्शितपताकेन ।

श्वसिति-उद्वाहितशिरसा ।

कथं-ऊर्ध्वतलालोलितपताकेन ।

असौ—अधोंगुलिपुरस्तलपताकेन ।

रसाल शाखां-चलदूर्ध्वगत त्रिपताकाभ्याम् कृतपल्लवेन च ।

चिरं—आवेष्टितोर्ध्वगतपताकेन ।

विरहेपि-वियुक्तसूचीमुखाभ्याम् ।

विलोक्य—उल्लोकितदृष्ट्या ।

पुष्पिताग्रां-ऊर्ध्वदर्शित कांगूलेन ॥

आवासो विपिनायते प्रियसखी मालापि जालायते
तापोपिश्वसितेन दावदहनज्वाला कलापायते ।
सापि त्वद्विरहेणहन्त हरिणीरूपायते हा कथं
कन्दर्पोंपियमायते विरचयन् शार्दूलविक्रीडितम् ॥

आवासः—ऊर्ध्वमिलितमृगशीर्षाभ्याम् ।

विपिनायते–चलदूर्ध्वगतत्रिपताकाभ्याम् विस्तारितपताकाभ्यां च ।

प्रिय—हृद्गतपताकेन ।

सखी–पार्श्वस्थिताधस्तलसर्पशीर्षेण ।

मालापि—पुरस्तान्मण्डलाकार भ्रामित सूचीमुखाभ्याम् ।

जालायते–सम्मुखकर्कटेन ।

तापोपि–चलदूर्ध्वगतपताकाभ्याम् विधुतशिरसा अभितप्तया दृष्टया च।

श्वसितेन–उद्वाहितोरसा ।

दावदहनज्वाला–चलदूर्ध्वगतपताकेन ।

कलापायते–आवर्तनेन कृतमुष्टिना ।

सापि–पार्श्वगतसूचीमुखेन ।

त्वत्–ऊर्ध्वतलविस्तारितपताकेन ।

विरहेण–वियुक्तसूचीमुखाभ्याम् ।

हन्त–विधुतशिरसा विषण्णया दृष्टया च ।

हरिणी–मृगस्तुताचार्या मृगशीर्षेण च ।

रूपायते–शनैरूर्ध्वाधोगतसन्दंशाभ्याम् ।

हा–विधुतशिरसा विषण्णया दृष्टया च ।

कथं–ऊर्ध्वतललोलितपताकेन ।

कन्दर्पः–हृद्यावेष्टितचतुरेण ।

अपि—आवर्तनेन ।

यमायते—पुरोलोलितसूचीमुखेन। अथवा दक्षिणदिग्दर्शितसूचीमुखेन
मुष्टिस्थशिखरेण च।

विरचयन्—अधोमुखहंसास्येन।

शार्दूलविक्रीडितम्—सिंहविक्रीडितकरणेन॥

---

## अष्टपदी ९

स्तनविनिहितमपि हारमुदारम्।
सामनुते कृशतनुरपि भारम्॥ १॥

स्तन—स्वस्तिकीकृतपद्मकोशाभ्याम्।

विनिहितं—शनैरधस्तलीकृतपताकेन।

अपि—आवर्तनेन।

हारं—स्कन्धदेशाचलन्नाभिपर्यन्तानीतखटकामुखाभ्याम्।

उदारं—लोलितालपल्लवेन।

सा—पार्श्वगतसूचीमुखेन।

मनुते—हृद्गतसन्दंशेन।

कृश—ऊर्ध्वमुखशुकतुण्डेन।

तनुः—अङ्गदर्शितहंसपक्षेण।

अति—किंचिदूर्ध्वगतावेष्टितपताकाभ्याम्।

भारं—अङ्गसमीपे शनैरावेष्टिताधस्तलीकृतपताकाभ्याम्॥ १॥

राधिका विरहे तव केशव॥

राधिका—आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा।

विरहे—वियुक्तसूचीमुखाभ्याम्।

तव—पुरःप्रसारितोर्ध्वतलपताकेन।

केशव—वैष्णवस्थानकेन केशबन्धेन च॥

सरसमसृणमपि मलयजपङ्कम् ।
पश्यति विषमिव वपुषि सशङ्कम् ॥ २ ॥

सरस—आवेष्टितचतुरेण ।

मसृणं—चलितांगुष्ठहंसास्येन ।

अपि—आवर्तनेन ।

मलयज—ऊर्ध्वगतालपल्लवेन । चलदूर्ध्वगतपताकाभ्यां च ।

पङ्कं—परावर्तितमुष्टिभ्यामङ्गलेपितहंसपक्षेण ।

पश्यति—अपाङ्गावर्तित त्रिपताकेन ।

विषमिव—विधुतशिरसा सर्पशीर्षाचलदधस्समानीत त्रिपताकेन

वपुषि—अङ्गदर्शितहंसपक्षेण ।

सशङ्कं—शङ्कितदृष्ट्याङ्गशङ्कितेन ॥ २ ॥

श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहम् ॥ ३ ॥

श्वसित—उद्वाहितोरसा ।

पवन—तिर्यक्प्रसारितचलत्पुरःसमानीतत्रिपताकेन ।

अनुपम—वामातिर्यक्प्रसारित दक्षिणपुरःप्रसारितालपल्लवाभ्याम् ।

परिणाहं—विस्तारितंपताकाभ्याम् ।

मदन—हृद्यावेष्टितचतुरेण ।

दहनं—विश्लिष्टांगुलिचलदूर्ध्वगतपताकेन ।

इव—आवर्तनेन ।

वहति—स्कंधगतालपल्लवेन ।

सदाहं—अभितप्तया दृष्ट्या श्वासोच्छ्वासेन ॥ ३ ॥

दिशिदिशि किरति सजलकणजालम् ।
नयननलिनमिव विगलित नालम् ॥ ४ ॥

दिशिदिशि—प्रतिदिग्दर्शितसूचीमुखेन ।
किरति—नयनादधस्समानीतानामिक त्रिपताकेन क्षिप्तांगुलिमुकुलेन च
सजल—ऊर्ध्वस्थित विश्लिष्टांगुलि अधोमुखपताकाभ्याम् ।
कण—क्षिप्तमुकुलेन ।
जालं—अधस्तलपुरोलोलितपताकाभ्याम् ।
नयन—अपाङ्गावर्तित त्रिपताकेन । अथवा नयनदर्शित त्रिपताकेन ।
नलिनं—कमलवर्तनया ।
इव—आवर्तनेन ।
विगलित—मिलितमुखावर्तितपरावर्तित किंचिद्वियुक्त हंसास्याभ्याम् ।
अथवा उद्वेष्टितपताकेन । अथवा उद्वेष्टितकर्तरीमुखेन ।
नालं—शनैरूर्ध्वाधोगच्छच्चलत्सन्दंशेन । अथवा ऊर्ध्वाधोगच्छद्भ्रम
द्भ्रमरेण ॥ ४ ॥

नयन विषयमपि किसलयतल्पम् ।
कलयति विहित हुताशनकल्पम् ॥ ५ ॥

नयन—अपाङ्गावर्तित त्रिपताकेन ।
विषयं—अधोंगुलिपुरस्तलपताकेन ।
अपि—आवर्तनेन ।
किसलय—पल्लवहस्तकेन ।
तल्पं—कपोलगतार्धचन्द्रेण स्कन्धानतेन शिरसा च । अथवा सुप्त
स्थानकेन ।
कलयति—हृद्यावेष्टितचतुरेण ।
विहित—शनैरधस्तलीकृतपताकेन ।

हुताशन—विश्लिष्टचलदंगुल्यूर्ध्वगतपताकाभ्याम् ।

कल्पं—मिलितसूचीमुखाभ्याम् ॥ ५ ॥

त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलम् ॥ ६ ॥

त्यजति—शनैःकिंचिद्विक्षिप्त विच्युतमुष्टिना ।

न—पुरस्तललोलितपताकेम ।

पाणितलेनकपोलं—करदर्शितपताकेन कपोलगतार्धचन्द्रेण स्कन्धानतेन शिरसा ।

बालशशिनं—तिर्यगूर्ध्वदर्शितार्धचन्द्रेणोत्क्षिप्त शिरसा च ।

इव—आवर्तनेन ।

सायं—वामदेशाद्दक्षिणमानीत परिभ्रामिसूचीमुखेन ।

अलोलं—समशिरसा पुरःप्रसारिताधस्तलस्तब्धपताकाभ्याम् ॥ ६ ॥

हरिरिति हरिरिति जपति सकामम् ।
विरह विहितमरणेव निकामम् ॥ ७ ॥

हरिः—त्रिभङ्गीस्थानकेन ।

इति—आवेष्टिपताकेन ।

जपति—अर्धमुकुलयां दृष्ट्या दक्चालितांगुष्ठसन्दंशेन ।

सकामं—हृद्यावेष्टित चतुरेण ।

विरह—वियुक्तसूचीमुखाभ्याम् ।

विहित—शनैरावेष्टिताधस्तलीकृतपताकेन ।

मरणेव—अश्लीलत्वात्त्याज्यम् ।

निकामं—हृद्गतसन्दंशेन शनैरावर्तित किंचिदूर्ध्वगतपताकाभ्याम् ॥

श्री जयदेव भणितमिति गीतम् ।
सुखयतु केशवपदमुपनीतम् ॥ ८ ॥

श्रीः—शनैः किंचिदूर्ध्वतलपल्लवेन ।
जयदेव—ललाटस्थांजलिना अवधूतशिरसा च ।
भणितं—अधरात्पुरोगतहंसास्येन ।
सुखयतु—हृद्गतपताकेन मुकुलया दृष्ट्या च ।
केशव—केशबन्धेन ।
पदं—चरणदर्शितपताकेन ।
उपनीतं—पुष्पपुटेन ॥ ७ ॥

स्मरातुरांदैवतवैद्यहृद्य त्वदङ्गसङ्गामृतमात्रसाध्याम् ।
वियुक्तबाधां कुरुषे न राधां उपेन्द्र वज्रादपि दारुणोऽसि ॥

स्मरातुरां—हृद्यावेष्टितचतुरेणाधोमुखेन शिरसाभितप्तया दृष्ट्या च ।
दैवत—ललाटस्थांजलिना ।
वैद्य—प्रकोष्ठस्थितचतुरेण ।
हृद्य—हृद्गतसन्दंशेन लोलितालपल्लवेन विकोशया दृष्ट्या च ।
त्वत्—पुरस्तलदर्शितपताकेन ।
अङ्ग—अङ्गदर्शितहंसपक्षेण ।
सङ्ग—मिलितसूचीमुखाभ्याम् ।
अमृत—अर्धचन्द्रेण ।
मात्र—ऊर्ध्वमुखसूचीमुखेन ।
साध्यां—आवर्तनेन कृतमुष्टिना ।
विमुक्त—परावर्तितपताकेन ।
बाधां—लोलित शिरसा ग्लानदृष्ट्या च ।

कुरुषे—अधोमुखहंसास्येन ।

न—पुरस्तलकंपितपताकेन ।

राधां—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

उपेन्द्र—वैष्णवस्थानकेन ।

वज्रात्—स्कंधसमीपस्थित पुरोलोलितपताकेन शिखरेण वीरदृष्ट्या च

अपि—आवर्तनेन ।

दारुणः—भयानक दृष्ट्या ।

असि—ऊर्ध्वतल पुरस्थितपताकेन ॥

कन्दर्पज्वर संज्वराकुलतनोराश्चर्यमस्याश्चिरम् ।
चेतश्चन्दनचन्द्रमःकमलिनीचिन्तासु सन्ताम्यति ।
किन्तुक्लान्तिवशेनशीतलतनुं त्वामेकमेव प्रियं
ध्यायन्ती रहसिस्थिता कथमपि क्षीणा क्षणं प्राणिति ।

कन्दर्प-हृद्यावेष्टितचतुरेण ।

ज्वर-विधुतशिरसाचलत्पताकाभ्यां अभितप्तया दृष्ट्या च ।

संज्वराकुल-अभितप्तया दृष्ट्याङ्गचलितेन ।

तनोः—अङ्गदर्शितहंसपक्षेण ।

आश्चर्य-अद्भुतदृष्ट्या हनुसंलग्न सूचीमुखेन ।

अस्याः-अधस्तलसर्पशीर्षं प्रति सन्दर्शितपताकेन ।

चिरं—आवेष्टितोर्ध्वगतपताकेन ।

चेतः—हृद्गतसन्दंशेन ।

चन्दन-उद्वेष्टितमुष्टिभ्यां अवधूत शिरसा च ।

चन्द्रमाः—अर्धचन्द्रेण ।

कमलिनी—कमलवर्तनया ।

चिन्तासु–कपोलगतार्धचन्द्रेण स्कन्धानतेन शिरसा शून्यदृष्ट्या च ।

सन्ताम्यति–ग्लानदृष्ट्याङ्गवलितैः ।

किन्तु–विच्युतसन्दंशेन ।

क्लान्ति–क्लान्तया दृष्ट्या ।

वशेन–शनैरधस्तलीकृतपताकेन ।

शीतलतनुं–कमलवर्तनया मिलितसूचीमुखाभ्याम् । अङ्गदर्शित हंसपक्षेण च ।

त्वां–पुरस्तलप्रसारितोर्ध्वतलपताकेन ।

एकं–ऊर्ध्वमुखसूचीमुखेन ।

एव–ऊर्ध्वतलमृगशीर्षेण ।

प्रियं–हृद्गतपताकेन ।

ध्यायन्ती–हृद्गतसन्दंशेन मुकुलया दृष्ट्या च ।

रहसि–ऊर्ध्वमुखतिर्यग्दर्शितसूचीमुखेन । अथवा ऊर्ध्वमुखसूचीमुखेनोर्ध्वस्थितमिलिताग्रमृगशीर्षाभ्यां च ।

स्थिता–शनैरधस्तलीकृतपताकेन ।

कथमपि–आवर्तितपताकेन ।

क्षीणा–ऊर्ध्वमुखलोलित शुकतुण्डेण ।

क्षणं–विच्युतकापित्थेन ।

प्राणिति–उद्वाहितोरसा ॥

अहमिह निवसामि याहि राधां
अनुनय मद्वचनेन चानयेथाः ।
इति मधुरिपुणा सखी नियुक्ता
स्वयमिदमेत्य पुनर्जगाद राधाम् ॥

अहं–जत्रुदर्शितालपल्लवेन ।

इह–अधोंगुलिपुरस्तलपताकेन ।

निवसामि–शनैरधस्तलीकृतपताकेन ।

याहि–तिर्यक्तलावेष्टितपताकेन ।

राधां–स्वस्तिकीकृतपद्मकोशाभ्याम् ।

अनुनय–हृत्स्थांजलिना ।

मद्वचनेन–हृत्स्थपताकेनाधरात्पुरोगतहंसास्येन च ।

च–आवर्तनेन ।

आनयेथाः–तिर्यक्स्थिताकर्षित मृगशीर्षेण ।

इति–आवर्तनेन ।

मधुरिपुणा–त्रिभङ्गीस्थानकेन ।

सखी–अधस्तलसर्पशीर्षेण हृद्गतपताकेन च ।

नियुक्ता–तिर्यक्तलावेष्टितपताकेन ।

स्वयं–हृद्गतपताकेन ।

इदं–ऊर्ध्वतलमृगशीर्षेण ।

एत्य–आकृषितमृगशीर्षेण । अथवा चतुरोपरिमिलितचतुरेण ।

पुनः–वारंवारावर्तनेन ।

जगाद–अधरात्पुरोगतहंसास्येन ।

राधां–आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा ॥

---

## अष्टपदी १०

वहति मलयसमीरे मदनमुपनिधाय ।
स्फुटति कुसुमसमूहे विरहि हृदयदलनाय ॥ १ ॥

वहति–पुरःप्रसारिताधस्तल लोलितपताकाभ्याम् ।

मलयसमीरे–ऊर्ध्वस्थितालपल्लवाचलदधस्समानीत त्रिपताकेन ।

मदनं—हृद्गतावेष्टित चतुरेण ।

उपनिधाय—शनैरधस्तलीकृतपताकेन ।

स्फुटति—विकासितमुकुलेन ।

कुसुम—कांगूलेन ।

समूहे-पुरोविस्तारितपताकाभ्याम् ।

विरहि-वियुक्तसूचीमुखाभ्याम् ।

हृदय—हृद्गतसन्दंशेन ।

दलनाय—पताकोपरिमर्दितपताकेन । अथवा रेचितहस्तकेनरौद्रया दृष्ट्या च ॥ १ ॥

सखिसीदति तव विरहे वनमाली ॥

सखि—वामाधस्तलीकृतसर्पशीर्षेण दक्षिणहृद्गतपताकेन च ।

सीदति-म्लानमुखरागेणाधोमुखशिरसा ग्लानदृष्ट्या च ।

तव—अधस्तलीकृतसर्पशीर्षप्रतिदर्शितपताकेन ।

विरहे-वियुक्तसूचीमुखाभ्याम् ।

वनमाली-स्कन्धोपरिदेशाज्जानुपर्यन्तानीत खटकामुखाभ्याम् ॥

दहति शिशिरमयूखे मरणमनुकरोति ।
पतति मदनविशिखे मनसि बहुदुनोति ॥ २ ॥

दहति-ऊर्ध्वगतचलत्पताकाभ्याम् ।

शिशिरमयूखे—तिर्यगूर्ध्वस्थितार्धचन्द्रादधःसमानीत चलत्त्रिपताकेनोत्क्षिप्तशिरसा च ।

मरणं—अश्लीलत्वात्यक्तम् ।

अनुकरोति-अञ्चितेन शिरसा कपोलगतार्धचन्द्रेण ।

पतति—उद्वेष्टित कर्तरीमुखेन ।

मदन—हृद्गतावेष्टितचतुरेण ।

विशिखे—कांगूलेन स्कन्धदेशात्किंचिदधःसमानीतविरलांगुलिपुरस्तल पताकेन वामप्रसारितमुष्टिदक्षिणाकर्णाकृष्टखटकामुखाभ्याम् ।

मनसि—हृद्गतसन्दंशेन ।

बहु—आवेष्टित किंचिदूर्ध्वंगतपताकाभ्याम् ।

दुनोति—विषण्णया दृष्ट्याञ्चलितेन च ॥ २ ॥

ध्वनति मधुपसमूहे श्रवणमपि दधाति ।
मनसि कलितहृदये निशिनिशिरुजमुपयाति ॥ ३ ॥

ध्वनति—अधरात्पुरोगतहंसास्येन ।

मधुप—भ्रमरेण ।

समूहे—आवर्तनेन कृतमुष्टिना । अथवा अधस्तलोपरिलोलितपताकाभ्याम् ।

श्रवणमपि दधाति—कर्णस्थत्रिपताकेन ।

मनसि—हृद्गतसन्दंशेन ।

कलित—आवेष्टितपताकेन ।

विरहे—वियुक्तसूचीमुखाभ्याम् ।

निशिनिशि—प्रसारिततिर्यग्गतोर्ध्वमुखपताकेन ।

रुजं—विधुतेन शिरसा चलदूर्ध्वंगतविश्लिष्टांगुलिपताकाभ्याम् । अथवा प्रकोष्ठेस्थित चतुरेण ।

उपयाति—आवेष्टिताधस्तलपताकाभ्याम् ॥ ३ ॥

वसति विपिन विताने त्यजति ललितधाम ।
लुठति धरणिशयने बहु विलपति तव नाम ॥ ४ ॥

वसति—शनैरावेष्टिताधस्तलीकृतपताकेन ।

विपिन—चलदूर्ध्वंगतत्रिपताकाभ्यां पल्लवेन च ।

वितानै—ऊर्ध्वमिलिताग्रमृगशीर्षाभ्याम् ।

त्यजति—उद्वेष्टितपताकेन ।

ललित—लोलितालपल्लवेन ।

धाम—ऊर्ध्वमिलिताग्रमृगशीर्षाभ्याम् ।

लुठति—लोलितशिरसाङ्गवलितेन ।

धरणि—पुरस्तलाधोदर्शित पताकेन ।

शयने—प्रसारितस्थानकेन मुकुलया दृष्ट्या च । अथवा कपोल गतार्धचन्द्रेण स्कन्धानतेन शिरसा च ।

बहु—आवेष्टितकिंचिदूर्ध्वगतपताकाभ्यां च ।

विलपति-म्लानमुखरागेण विषण्णया दृष्ट्या अधरात्पुरोगतहंसास्येन च

तव—अधस्तलसर्पशीर्षप्रतिदर्शितपताकेन ।

नाम—अधरात्पुरोगतहंसास्येन ॥ ४ ॥

भणति कविजयदेवे विरह विलसितेन ।
मनसिरभसविभवे हरिरुदयतु सुकृतेन ॥ ५ ॥

भणति—अधरात्पुरोगतहंसास्येन ।

कविजयदेवे—ललाटस्थकपोतेन ।

विरह—वियुक्तसूचीमुखाभ्याम् ।

विलसितेन—लोलितालपल्लवेन ।

मनसि—हृद्गतसन्दंशेन ।

रभसविभवे—हृद्गतविकसितमुकुलेन ।

हरिः—त्रिभङ्गीस्थानकेन ।

उदयतु—शनैरूर्ध्वगतालपल्लवाभ्याम् ।

सुकृतेन—अधोमुखविकसितमुकुलेन ॥ ५ ॥

पूर्वं यत्र समं त्वया रतिपते रासादितास्सिद्धयः
तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।
ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलिं
भूयस्त्वत्कुचकुम्भनिर्भरपरीरंभामृतं वाञ्छति ॥

पूर्वं—आवेष्टितोर्ध्वगतपताकेन ।

यत्र—पार्श्वगतसूचीमुखेन तिर्यग्दृष्ट्या च ।

समं—मिलितसूचीमुखाभ्याम् ।

त्वया—अधस्तलीकृतसर्पशीर्षं प्रतिदर्शितपताकेन ।

रतिपतेः—हृद्यावेष्टितचतुरेण ।

आसादिताः—अधस्तलीकृतावेष्टितपताकेन ।

सिद्धयः—आवर्तनेन कृतमुष्टिना ।

तस्मिन्—तिर्यग्दर्शितसूचीमुखेन ।

एव—ऊर्ध्वतलमृगशीर्षेण ।

निकुंज—चलदूर्ध्वानीतलताकरपल्लवाभ्यां च ।

मन्मथ—हृद्यावेष्टित चतुरेण ।

महा तीर्थे—पुरः अधोमुखावर्तितसूचीमुखाभ्याम् ।

पुनः—आवेष्टितपताकेन ।

माधवः—त्रिभङ्गीस्थानकेन ।

ध्यायन्-हृद्गतसन्दंशेन ।

त्वां—अधस्तलसर्पशीर्षदर्शितपताकेन ।

अनिशंजपन्—निमीलितदृष्ट्याहृच्चालितांगुष्ठसन्दंशेन ।

अपि—आवर्तनेन ।

तवैव—अधस्तलसर्पशीर्षदर्शितपताकेन ।

आलाप—आकंपितेन शिरसा अधरात्पुरोगतहंसास्येन च ।

मन्त्रावलिं—कर्णस्थहंसास्येन ।

भूयः—आवेष्टितपताकेन ।

त्वत्–अधस्तलसर्पशीर्षदर्शितपताकेन ।

कुचकुम्भ–स्वस्तिकीकृतपद्मकोशाभ्याम् ।

निर्भरपरीरंभ—गाढोत्सङ्गेन ।

अमृतं– अर्धचन्द्रेण ।

वांछति—हृद्गतहंसास्येन पुनःपुरोनीततेनैव ॥

त्वद्बाष्पेण समं समग्रमधुना तिग्मांशुरस्तङ्गतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमःसांद्रताम् ।
कोकानां करुणस्वरेण सदृशी दीर्घा मर्मप्रार्थना
तन्मुग्धे विफलं विलम्बनमसौ प्राप्तोभिसारक्षणः ॥

त्वत्—अधस्तलसर्पशीर्षपताकेन ।

बाष्पेण—नयनाच्चलदधस्समानीतत्रिपताकेन ।

समं—मिलितसूचीमुखाभ्याम् ।

समग्रं—आवर्तनेन कृतमुष्टिना ।

अधुना—ऊर्ध्वतलमृगशीर्षेण ।

तिग्मांशुरस्तङ्गतः—पार्श्वदेशाच्चलदपरपार्श्वेसमानीत सूचीमुखेन ।

गोविन्दस्य—त्रिभङ्गीस्थानकेन च । हृद्गतसन्दंशेन ।

समं–मिलितसूचीमुखाभ्याम् ।

प्राप्तं–चतुरोपरिचतुरेण ।

तमः सांद्रतां–ऊर्ध्वविस्तारितपताकेनमिलिताधस्तलपताकाभ्यां च ।

कोकानां—हंसास्येन ।

करुण—करुणया दृष्ट्या ।

स्वनेन—अधरात्पुरोगतहंसास्येन ।
सदृशी-मिलितसूचीमुखाभ्याम् ।
दीर्घा—शनैरावेष्टितोर्ध्वतलपताकेन ।
मम—जत्रुदर्शितालपल्लवेन ।
प्रार्थना-हृदिस्थांजलिना ।
तत्—पुरोदेशदर्शितसूचीमुखेन ।
मुग्धे—स्वस्तिकीकृतकांगूलाभ्याम् ।
विफलं-विच्युतकपित्थेन ।
विलंबनं—विलंबगत्या ।
असौ—पुरोदर्शिताधस्तलपताकेन ।
रम्यः— लोलितसन्दंशेन ।
अभिसार-अधोंगुलिचलत्पुरःप्रसारितपताकेन ।
क्षणः—ऊर्ध्वमुखकिंचिद्विच्युतसन्दंशेन ॥

---

## अष्टपदी ११

रतिसुखसारे गतमभिसारे मदनमनोहरवेषम्
न कुरुनितम्बिनि गमनविलम्बनमनुसर तं हृदयेशम् ॥१॥

रति-मिलितांगुलितलत्रिपताकाभ्याम् । अथवा ललितदृष्ट्योत्सङ्गेन च।
सुख—हृद्गतपताकेन मुकुलया दृष्ट्या ।
सारे—शनैरावर्तनेन कृतमुष्टिना ।
गतं-आवेष्टितपताकेन ।
अभिसारे—ऊर्ध्वमिलिताग्रमृगशीर्षाभ्याम् ।
मदन-हृद्यावेष्टितचतुरेण ।
मनोहर-लोलितालपल्लवेन ।

वेषं ऊर्ध्वाधोमुखसन्दंशाभ्याम् ।

न—पुरस्तल कम्पितपताकेन ।

कुरु—अधोमुखहंसास्येन ।

नितम्बिनि—नितम्बहस्तकेन ।

गमन-अधोंगुलिपुरःप्रसारितपताकेन । अथवा ऊर्ध्वतलतिर्यग्लोलित मृगशीर्षेण ।

विलम्बनं-करिहस्तचार्या ।

अनुसर—अवधूतशिरसा अधोंगुलि पुरःप्रसारितपताकेन ।

तं—पार्श्वगतसूचीमुखेन ।

हृदयेशं—हृद्गतसन्दंशेनावर्तनेन कृतमुष्ट्युपरिशिखरेण ॥ १ ॥

धीरसमीरे यमुनातीरे वसति वने वनमाली ।
गोपीपीनपयोधरमर्दन चञ्चल करयुगशाली ॥

धीरसमीरे-अधस्तल पुरःप्रसारित किंचिल्लोलितपताकाभ्याम् ।

यमुना-ऊर्ध्वभ्रामितसूचीमुखचलदधःसमानीत त्रिपताकेन मकर-हस्तकेन च ।

तीरे—पुरश्चलत्प्रसारित त्रिपताकाभ्याम् ।

वसति—शनैरावेष्टिताधस्तलीकृतपताकाभ्याम् ।

वने—पल्लवहस्तकेन प्रसारितपताकाभ्यां च ।

वनमाली-स्कन्धादुपरिदेशाज्जानुपर्यन्तानीत खटकामुखाभ्याम् ।

गोपी—शिरस्थालपल्लवेन। कर्पितांचलखटकामुखेन परावृत्तेन शिरसा कान्तया दृष्ट्या च ।

पीनपयोधर-हृदिस्थित स्वस्तिकीकृतालपल्लवाभ्याम् ।

मर्दन—वक्षस्युपरि शनैर्मर्दितपताकेन ।

चंचल—कम्पितपताकेन ।

कर–करदर्शितपताकेन ।

युग–पुरस्तलार्धपताकेन ।

शाली–तिर्यक्पुरःप्रसारितलोलितालपल्लवाभ्याम् ॥

नामसमेतं कृतसङ्केतं वादयते मृदु वेणुम् ।
बहुमनुने ननु ते तनुसङ्गतपवनचलितमपि रेणुम् ॥२॥

नाम–अधरात्पुरोगतहंसास्येन ।

समेतं–मिलितसूचीमुखाभ्याम् ।

कृत–अधोमुखहंसास्येन ।

सङ्केतं–तिर्यग्दर्शितसूचीमुखेन ।

वेणुं–वंशधारिणेन ।

बहु–आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

मनुते–हृद्गतसन्दंशेन ।

ननु–शनैरधस्तलीकृतचतुरेण ।

ते–पुरःप्रसारितोर्ध्वतलपताकेन ।

तनु–अङ्गदर्शितहंसपक्षेन ।

सङ्गत–मिलितसूचीमुखाभ्याम् ।

पवन–तिर्यक्प्रसारित चलत्पुरस्समानीतत्रिपताकेन ।

चलितं–कम्पितपताकेन ।

अपि–आवर्तनेन ।

रेणुं–निष्पेषिताधोमुखसन्दंशाभ्याम् ॥ २ ॥

पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ।
रचयति शयनं स चकितनयनं पश्यति तव पन्थानम् ॥३॥

पतति पतत्रे–तिर्यक्प्रसारितेन चलत्पुरस्समानीतहंसपक्षेण ।

विचलतिपत्रे—आवर्तितपरावर्तित विस्तारितचतुराभ्याम् ।

शङ्कित—शङ्कितदृष्ट्याङ्गशङ्कितेन ।

भवत्—पुरःप्रसारितोर्ध्वतलपताकेन ।

उपयानं—तिर्यगाकर्षितमृगशीर्षेण ।

रचयति—परस्परसम्मुखावर्तित परावर्तितहंसाभ्याम् ।

शयनं—कपोलगतार्धचन्द्रेण स्कन्धानतेन शिरसा । अथवा प्रसारित
स्थानकेन मुकुलया दृष्ट्या च ।

सचकितनयनं—त्रस्तया दृष्ट्यापाङ्गावर्तितचतुराभ्याम् ।

पश्यति—कान्तया दृष्ट्या अध्यर्धिकाचार्या च ।

तव—पुरःप्रसारितोर्ध्वतलपताकेन ।

पन्थानं—ऊर्ध्वतलतिर्यग्गतमृगशीर्षेणाध्यर्धिकाचार्या च ।। ३ ।।

मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलोलम् ।
चल सखि कुंजं सतिमिरपुंजं शीलय नीलनिचोलम् ।।४।।

मुखरं—अधरात्पुरोगत चलद्धंसास्येन ।

अधीरं—चलत्रिपताकेन ।

त्यज—किंचिद्विक्षिप्त विच्युतमुष्टिना ।

मंजीरं—गुल्फोपरिदर्शितार्धचन्द्रेण ।

रिपुं—स्कन्धदेशात्तिर्यग्गताधस्तलपताकेन ।

इव—आवर्तनेन ।

केलि—उत्सङ्गेन ललित दृष्ट्या च ।

सुलोलं—लोलितालपल्लवेन ।

चल—ऊर्ध्वतलतिर्यग्गतमृगशीर्षाभ्याम् । अथवा अधोंगुलि पुरःप्रसा
रितपताकेन ।

सखि—अधस्तलीकृतसर्पशीर्षेण ।

कुंजं—ऊर्ध्वगततलताकरेण कृतपल्लवेनोर्ध्वमीलिताग्रमृगशीर्षाभ्याम्
सतिमिर—ऊर्ध्वतिर्यग्गतपताकेन।
पुंजं—मिलिताधस्तलपताकाभ्याम्।
शलिय—पार्श्वदेशात्पुरस्समानीत परस्परसम्मुखावर्तितपरावर्तित खटकामुखाभ्यां च।
नील निचोकं—ऊर्ध्वप्रसारितचलत्सन्दंशेन। आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा॥ ४॥

उरसिमुरारे रुपहितहारे घन इव तरलबलाके।
तडिदिवपीते रतिविपरीते राजसि सुकृतविपाके॥५॥

उरसि—हृद्गतपताकेन।
मुरारेः—त्रिभङ्गीसंस्थानकेन।
उपहितहारे—स्कंधोपरिदेशाच्छनैर्जानुपर्यन्तानीव खटकामुखाभ्याम्।
घन—ऊर्ध्वस्थिताधः प्रसृतांगुलिपताकाभ्याम्।
इव—आवर्तनेन।
तरलबलाके—तिर्यक्प्रसारित चलत्पुरःसमानीतहंसपक्षेण।
तडित्—ऊर्ध्वपुरःप्रसारिताधस्तलचलत्तिर्यग्गतत्रिपताकेन। अथवा पुनःपुनः स्वास्तिकीकृत विच्युतचलत्रिपताकाभ्यां च।
इव—आवर्तनेन।
पीते—करभोपरिचालितसन्दंशेन।
रति—मिलितांगुलितलत्रिपताकाभ्याम्।
विपरीते—विनिमयेनोर्ध्वाधःकृतमिलितांगुलितलत्रिपताकाभ्यां च।
राजसि—लोलितालपल्लवेन।
सुकृत—अधोमुखविकसितमुकुलेन।
विपाके—शनैरधस्तलीकृतपताकेन॥ ५॥

विगलितवसनं परिहृतरशनं घटय जघनमपिधानम् ।
किसलयशयने पङ्कजनयने निधिमिवहर्षनिदानम् ॥ ६ ॥

विगलित—कटिस्थपरावृत्तकर्तरीमुखाभ्याम् ।
वसनं—कटिपार्श्वदेशात्पुरस्समानीतसन्दंशाभ्याम् ।
परिहृदरशनं—उद्वेष्टितपताकेन कटिस्थितार्धचन्द्राभ्यां च ।
घटय—मिलितसूचीमुखाभ्याम् ।
जघनं—नितम्बहस्तकेन ।
अपिधानं—शनैरावर्तिताधस्तलपताकाभ्याम् ।
किसलय—पल्लवहस्तकेन ।
शयने—कपोलगतार्धचन्द्रेण स्कन्धानतेन शिरसा । अथवा सुप्त-
स्थानकेन ।
पङ्कज—कमलवर्तनया ।
नयने—अपाङ्गावर्तितचतुरेण ।
निधिं—आवर्तनेन कृतमुष्टिना ।
इव—आवर्तनेन ।
हर्ष—हृदिस्थविकासितमुकुलेन । हृष्टया दृष्ट्या च ।
निदानं—आवेष्टिताधस्तलचतुरेण ॥ ६ ॥

हरिरभिमानी रजनिरिदानीमियमपियाति विरामम् ।
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम् ॥ ७ ॥

हरिः—त्रिभङ्गीस्थानकेन ।
अभिमानी—आधूतशिरसा शनैरूर्ध्वगतालपल्लवेन च ।
रजनिः—पुरःप्रसारितांगुलितलतिर्यक्पताकेन ।
इदानीं—किंचिदधस्समानीनोर्ध्वतलमृगशीर्षेण ।
इयं—अधोंगुलिपुरस्तलदर्शितपताकेन ।

अपि—आवर्तनेन ।

याति—तिर्यगावर्तित पताकेन ।

विरामं—शनैरावर्तिताधस्तलपताकेन ।

कुरु—अधोमुखहंसास्येन ।

मम—जत्रुदर्शितालपल्लवेन ।

वचनं—अधरात्पुरोगतहंसास्येन ।

सत्वर—वारं वारं त्वरयावेष्टितपताकेन।

रचनं—परस्परं पुरोगच्छचतुराभ्याम् ।

पूरय—शनैःपुरोलोलिताधस्तलपताकाभ्याम् ।

मधुरिपु—त्रिभङ्गीस्थानकेन ।

कामं—शनैरावेष्टित हृद्गतचतुरेण स्निग्धया दृष्ट्या च ॥ ७ ॥

श्री जयदेवे कृतहरिसेवे भणति परमरमणीयम् ।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम् ॥८॥

श्री—शनैरूर्ध्वानीतालपल्लवेन ।

जयदेवे—ललाटस्थांजलिनावधूतशिरसा च ।

कृत—अधोमुखहंसास्येन ।

हरि—त्रिभङ्गीस्थानकेन ।

सेवे—हृत्स्थांजलिना ।

भणति—अधरात्पुरोगतहंसास्येन ।

परम—आवेष्टितंकिंचिदूर्ध्वगतपताकेन ।

रमणीयं—लोलितालपल्लवेन ।

प्रमुदित—हृत्स्थविकासितमुकुलेन हृष्टया दृष्ट्या च ।

हृदयं—हृद्गतसन्दंशेन ।

हरिं—त्रिभङ्गीस्थानकेन ।

अति—आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

सदयं—हृद्गतपताकेन स्निग्धया दृष्ट्या च ।

नमत—ललाटस्थकपोतेनावधूत शिरसा च ।

सुकृत—अधोमुखविकासितमुकुलेन ।

कमनीयं—लोलितालपल्लवेन ॥ ८ ॥

विकिरतिमुहुः श्वासानाशां पुरोमुहुरीक्षते
प्रविशतिमुहुः कुंजं गुंजन्मुहुर्बहुताम्यति ।
रचयतिमुहुश्शय्यां पर्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्तेप्रियस्तव वर्तते ॥

विकिरति—नासात्पुरोक्षिप्त त्रिपताकेन ।

मुहुः—शनैरावर्तितत्रिपताकेन ।

श्वासान्—श्वासोच्छ्वासेन ।

आशांपुरः—पुरोदर्शितसूचीमुखेन ।

मुहुः—शनैरावर्तितपताकेन ।

ईक्षते—विकोशया दृष्ट्या ।

प्रविशति—अधोंगुलिपुरःप्रसारितपताकेन हंसगत्याचार्या ।

मुहुः—पूर्ववत् ।

कुंजं-चलल्लताकरोर्ध्वसमानीत मृगशीर्षाभ्याम् ।

गुञ्जन्—कर्णगतचलत्सन्दंशेन । अथवा अधरात्पुरोगतहंसास्येन
विषण्णया दृष्ट्या च ।

मुहुः—पूर्ववत् ।

बहु—आवेष्टितोर्ध्वगतपताकाभ्याम् ।

ताम्यति— ग्लानदृष्ट्याङ्गवलितेन ।

रचयति—खटकामुखाभ्याम् ।

मुहुः—पूर्ववत् ।

शय्यां-प्रसारितपताकाभ्याम् स्कन्धानतेन शिरसा कपोलगतार्धचन्द्रेण अथवा सुप्तस्थानकेन ।

पर्याकुलं-हृदि उद्वेष्टितपताकेन ।

मुहुः-पूर्ववत् ।

वीक्षते—त्रिप्लुतया दृष्ट्या ।

मदन-हृद्यावेष्टित चतुरेणं ।

कदन-रेचितहस्तकेन अथवा वामकरमुष्टिदक्षिकर्णाकृष्टखटकामुखाभ्याम् ।

क्लान्तः-ग्लानंदृष्ट्या ।

कान्ते-अधस्तलसर्पशीर्षै प्रतिदर्शितपताकेन ।

प्रियः-हृद्गतपंताकेन ।

तव—पुरस्तलदर्शितपताकेन ।

वर्तते-ऊर्ध्वतलमृगशीर्षेण ॥

सभयचकितं निन्यस्यन्तीं भृशंदृशमन्तरे
प्रतितरुमुहुःस्थित्वा मन्दं पदानि वितन्वतीम् ।
कथमपिरहः प्राप्तां अङ्गैरनङ्गतरङ्गिभिः
सुमुखि सुभगः पश्यन्सत्वामुपैतु कृतार्थताम् ॥

सभयचकितं-विधुतशिरसा त्रस्तयादृष्ट्या च ।

विन्यस्यन्तीं-परस्परपुरोगत चतुराभ्यांम् ।

भृशं-आवर्तनेन ।

दृशं-अपाङ्गचलत्रिपताकेन ।

अन्तरे-पुरोदर्शितपताकेन ।

प्रतितरु—पृथक् पृथक् दर्शितचलत्रिपताकाभ्याम् ।

मुहुः—आवर्तनेन ।

स्थित्वा—अधस्तलीकृतपताकेन ।

मन्दंपदानिवितन्वतीं-विलम्बगत्याचार्या परस्परपुरोगत चतुरा-
भ्याम् ।

कथमपि – शनैरावर्तितपताकेन ।

रहः-ऊर्ध्वमुखसूचीमुखेन ।

प्राप्तां-अधस्तलीकृतपताकेन ।

अङ्गैः-अङ्गदर्शित हंसपक्षैः ।

अनङ्ग-हृद्यावेष्टित चतुरेण ।

तरङ्गिभिः-परस्परानुगच्छचलदंगुलिभिरूर्ध्वाधस्तलस्थितपताकाभ्यां।

सुमुखि—लोलितसन्दंशेन हनोरधोलपल्लवेन ।

सुभगः-ऊर्ध्वगतालपल्लवेन ।

पश्यन्—अपाङ्गविलोलित चतुराभ्याम् ।

सः—पार्श्वगतसूचीमुखेन ।

त्वां-अधस्तलसर्पशीर्षं प्रतिदर्शितपताकेन ।

उपैतु—आवेष्टितोर्ध्वगतपताकेन ।

कृतार्थतां—ऊर्ध्वतलोर्ध्वगतपताकाभ्याम् ॥

——:——

॥ इति रतिसुखसारे ॥

अथ तांगन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ।
तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥

अथ—आवर्तितपताकेन ।

तां-पार्श्वगतसूचीमुखेन ।

गन्तुमशक्तां—चलत्पुरःप्रसारितपताकेन सवलद्गत्याचार्या च ।

चिरं—शनैरावेष्टितोर्ध्वगतपताकेन ।

अनुरक्तां-हृद्गतचतुरेण ।

लतागृहे-शनैरूर्ध्वानीतलताकरेणोर्ध्वमीलितमृगशीर्षाभ्यां च ।

दृष्ट्वा-अपाङ्गविलुलित चतुराभ्याम् ।

तत्-तिर्यग्दर्शितसूचीमुखेन ।

चरितं-ऊर्ध्वतलविस्तारित पताकेन ।

गोविन्दे—त्रिभङ्गीस्थानकेन ।

मनसिजमन्दे-हृद्यावेष्टित चतुरेण भ्रान्तदृष्ट्या च ।

सखी-अधस्तलसर्पशीर्षेण हृद्गतपताकेन च ।

प्राह-अधरात्पुरोगतहंसास्येन ॥

अङ्गेष्वाभरणं करोति बहुशः पत्रेपि संचारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्प विकल्प तल्परचना सङ्कल्पलीलाशत
व्यासक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥

अङ्गेषु-अङ्गदर्शितहंसपक्षेण ।

आभरणं-प्रकोष्ठगतार्धचन्द्रेण प्रत्यङ्गदर्शिताभरणमुद्राभिश्च ।

करोति-अधोमुखहंसास्येन ।

बहुशः—आवेष्टितोर्ध्वतलपताकाभ्याम् ।

पत्रे-दर्शितचतुरेण ।

अपि—आवर्तनेन ।

संचारिणि—पुरःप्रसारित चलत्पताकाभ्याम् ।

प्राप्तं—तिर्यगाकर्षितमृगशीर्षेण ।

त्वां—पुरःप्रसारितोर्ध्वतलपताकेन ।

परिशङ्कते—शङ्कितया दृष्ट्या ।

वितनुते—विस्तारितोर्ध्वतलपताकेन ।

शय्यां—विस्तारितोर्ध्वतलपताकाभ्याम् । सुप्तस्थानकेन च ।
चिरं—शनैरावेष्टितोर्ध्वगतपताकेन ।
ध्यायति—हृद्गतसन्दंशेन निमीलित दृष्ट्या च ।
इति—आवेष्टितपताकेन ।
आकल्प—अङ्गदर्शितसन्दंशाभ्याम् ।
विकल्प—आवेष्टितोद्वेष्टित चतुरेण ।
तल्प—विस्तारितोर्ध्वतलपताकाभ्यां सुप्तस्थानकेन च ।
रचना—मिलितमुखलोलितहंसास्याभ्याम् ।
संकल्प-हृद्देशात्पुरोगतोर्ध्वमुखसन्दंशेन ।
लीला—गजगत्या लोलितचतुरेण ।
शतं—ऊर्ध्वमुखस्तब्धसूचीमुखेन ।
व्यासक्ता—हृदयात्पुरोमीलित चतुराभ्याम् ।
अपि—आवर्तनेन ।
विना-वियुक्तसूचीमुखाभ्याम् ।
त्वया-पुरोदर्शितोर्ध्वतलपताकेन ।
वरतनुः—लोलितालपल्लवेनाङ्गदर्शित हंसपक्षेन ।
न-ऊर्ध्वांगुलिपुरस्तलकम्पितपताकेन ।
एषा-अधोंगुलिपुरस्तलदर्शितपताकेन ।
निशां—ऊर्ध्वमुखविस्तारितपताकाभ्याम् ।
नेष्यति-शनैरूर्ध्वगतालपल्लवेन ॥

---

## अष्टपदी १२

पश्यति दिशिदिशि रहसि भवन्तम् ।
त्वदधरमधुरमधूनि पिबन्तम् ॥ १ ॥

पश्यति-अपाङ्गावर्तित त्रिपताकेन ।

दिशिदिशि–प्रतिदिग्दर्शित सूचीमुखेन ।

रहसि–पार्श्वगतोर्ध्वमुखसूचीमुखेन ।

भवन्तं—पुरःप्रसारितोर्ध्वतलपताकेन ।

त्वत्—तिर्यग्दर्शितसूचीमुखेन ।

अधर—अधरोपरिचालितसन्दंशेन ।

मधुरमधूनि–मदिरया दृष्ट्या मत्तल्याचार्या च ।

पिबन्तं–मुखस्थशिखरेण । अथवा मुखसमीपे ऊर्ध्वाधोमिलितमुकुलाभ्याम् ॥ १ ॥

नाथ हरे । सीदति राधा वासगृहे ॥

नाथ–आवर्तनेन कृतमुष्टिस्थशिखरेण च । अथवा मृगशीर्षेण ।

हरे–त्रिभङ्गीस्थानकेन ।

सीदति–ग्लानदृष्ट्या म्लानमुखरागेणावधूतेन शिरसाङ्गवलितेन च ।

राधा–आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा । अथवा स्वस्तिकीकृतपद्मकोशाभ्याम् । यद्वा अधस्तलीकृतसर्पशीर्षेण ।

वास– शनैरावेष्टिताधस्तलीकृतपताकेन ।

गृहे–मीलिताग्रमृगशीर्षाभ्याम् ॥

त्वदभिसरण रभसेनवलन्ती ।
पतति पदानि कियन्ति चलन्ती ॥ २ ॥

त्वत्–पुरःप्रसारितोर्ध्वतलपताकेन ।

अभिसरण–अवधूतशिरसा तिर्यगधोङ्गुलि पुरःप्रसारितपताकेन । अद्भुताचार्या ।

रभसेन–त्वरया आवर्तितपताकेन ।

वलन्ती–अङ्गवलितेन ।

पतति—प्रवालितगत्याङ्गवलितेन ।

पदानि कियन्ति—समपादाचार्या चतुरात्पुरोगतचतुरेण ।

चलन्ती—मत्तल्याचार्या ॥ २ ॥

विहित विशद बिसकिसलयवलया ।
जीवति परमिह तव रतिकलया ॥ ३ ॥

विहित—शनैरावेष्टिताधस्तलीकृतपताकेन ।

विशद—विस्तारितपताकाभ्याम् ।

बिस—कमलवर्तनया शनैरूर्ध्वाधोगतसन्दंशेन ।

किसलय—पल्लवेन ।

वलया—प्रकोष्ठस्थितार्धचन्द्रेण ।

जीवति—हृद्गतपताकेन शनैःश्वसितेन च ।

परं—आवेष्टित किञ्चिदूर्ध्वगतपताकेन ।

इह—पुरस्तलदर्शितपताकेन ।

तव—पुरःप्रसारितोर्ध्वतलपताकेन ।

रति—मिलितांगुलितलत्रिपताकाभ्यां । अथवा उत्सङ्गेन ।

कलया—ऊर्ध्वमुखकपित्थेन ।

मुहुरवलोकित मण्डनलीला ।
मधुरिपुरहमिति भावनशीला ॥ ४ ॥

मुहुः—वारं वारं आवेष्टितपताकेन ।

अवलोकित—अङ्गावलोकनेन ।

मण्डन—अङ्गभूषणानि दर्शितहंसास्यार्धचन्द्राभ्यां च ।

लीला—लोलितालपल्लवेन निहंचितशिरसा च ।

मधुरिपुः—त्रिभङ्गीस्थानकेन ।

अर्हं—जत्रुदर्शितालपल्लवेन ।

इति—आवर्तनेन ।

भावनशीला—हृद्गतसन्दंशेन मुकुलया दृष्ट्या च ॥ ४ ॥

त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ ५ ॥

त्वरितमुपैति—आकर्षितमृगशीर्षेण ।

न—पुरस्तललोलितपताकेन ।

कथं—ऊर्ध्वतललोलितपताकेन ।

अभिसारं—पार्श्वगतसूचीमुखेन मिलितमृगशीर्षाभ्यां च ।

हरिः—त्रिभङ्गीस्थानकेन ।

इति—आवेष्टितपताकेन ।

वदति—अधरात्पुरोगतहंसास्येन ।

सखीं—अधस्तलीकृतसर्पशीर्षेण हृद्गतपताकेन च

अनुवारं—वारं-वारं आवर्तितपताकेन ॥ ५ ॥

श्लिष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ ६ ॥

श्लिष्यति—उत्सङ्गेन ।

चुम्बति—अधरसमीपे मुकुलोपरिमुकुलेन ।

जलदर—तिर्यक्प्रसारित शनैरूर्ध्वसमानीत त्रिश्लिष्टाधोंगुलिपताकाभ्यां

कल्पं—मिलितसूचीमुखाभ्याम् ।

हरिः—त्रिभङ्गीस्थानकेन ।

उपगतः—पुरोदेशादाकर्षिताधस्तलमृगशीर्षेण 'हृष्टादृष्ट्या च ।

इति-आवर्तनेनं ।

तिमिरं—ऊर्ध्वविस्तारितपताकाभ्याम् ।
अनल्पं—आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ॥ ६ ॥

भवति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ ७ ॥

भवति—पुरःप्रसारितोर्ध्वतलपताकेन ।
विलम्बिनि—अधस्तलपताकेन । विलम्बगत्या ।
विगलित—पुरःशनैरुद्वेष्टित कर्तरीमुखेन ।
लज्जा—लज्जितया दृष्ट्या परावृत्तेन शिरसा ।
विलपति—अवधूतशिरसा विषण्णया दृष्ट्या अधरात्पुरोगतहंसास्येन च
रोदिति—नेत्रादधोगत चलत्रिपताकेन ।
वासकसज्जा—हंसास्योर्ध्वचन्द्राभ्याम् आभरण दर्शिताभ्यां स्वस्तिकीकृतपद्मकोशाभ्याम् ॥ ७ ॥

श्री जयदेवकवेरिदमुदितम् ।
रसिकजनं तनुतामपि मुदितम् ॥ ८ ॥

श्री—किंचिदूर्ध्वानीतालपल्लवेनावधूतशिरसा च ।
जयदेव—ललाटस्थकपोतेन ।
कवेः—अधरात्पुरोगतहंसास्येन ।
इदं—पुरस्तलाधोंगुलिपताकेन ।
उदितं—अधरात्पुरोगतहंसास्येन ।
रसिकजनं—विस्तारितचतुराभ्याम् ।
तनुतां—पुरःप्रसारित विस्तारितपताकेन ।
अति—आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।
मुदितं—हृदिस्थविकासितमुकुलेन ॥ ८ ॥

विपुलपुलकपाली स्फीतसीत्कारमन्त-
र्जनितजडिमकाकु व्याकुलंव्याहरन्ती ।
तव कितव विधायामन्दकन्तर्पचिन्ता
स्मरजलधिनिमग्ना ध्यानलग्ना मृगाक्षी ॥

विपुल—अधस्तलपुरोमिलितपताकाभ्याम् ।
पुलकपाली—अङ्गे चलदूर्ध्वगतहंसपक्षेण ।
स्फीत-विस्तारितपताकाभ्याम् ।
सीत्कारं-अङ्गशङ्कितेन ।
अन्तर्जनित-हृद्गतसन्दंशेनोर्ध्वगतालपल्लवेन ।
जडिम—हृद्गतंमुष्टिना ।
काकु-कर्णगतत्रिपताकाभ्याम् ।
व्याकुलं-हृद्युद्वेष्टितचतुरेण ।
व्याहरन्ती-अधरात्पुरोगतहंसास्येन ।
तव-पुरःप्रसारितोर्ध्वतलपताकेन ।
कितव—दर्शितताम्रचूडहृद्गतसन्दंशेन ।
विधाय—अधस्तलीकृतपताकेन ।
स्मर-हृद्यावेष्टितचतुरेण ।
जलधि-विस्तारितोर्ध्वतलपताकाभ्याम् ।
निमग्ना-अधोगतमुष्टिना ।
ध्यान—हृद्गतसन्दंशेनमीलितदृष्ट्या च ।
लग्ना-निमीलिताग्रतल सूचीमुखाभ्याम् ।
मृगाक्षी-दर्शित मृगशीर्षेणपाङ्गवलित त्रिपताकेन ॥

अत्रान्तरे च कुलटाकुलवर्त्मघात
संजातपातक इव स्फुटलांछनश्रीः ।

बृन्दावनान्तरमदीपयदंशुजालैः
दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥

अत्रान्तरे-आवेष्टितोर्ध्वतलपताकेन ।

च-आवर्तनेन ।

कुलटा-ऊर्ध्वविस्तारितपताकाभ्याम् अधोंगुलिपुरःप्रसारितपताकेन च

कुलवर्त्म-आवर्तनेन कृतमुष्टिना विस्तारितपताकेन च ।

घात-स्कन्धदेशात्तिर्यग्गताधस्तलपताकेन ।

संजातपातकः-विधुतशिरशा ।

इव-आवर्तनेन ।

स्फुट-विकसितमुकुलेन विस्तारितोर्ध्वतलपताकेन च ।

लांछनश्रीः-अर्धचन्द्रादधोदर्शित मृगशीर्षेण ।

बृन्दावनान्तरं-चलदूर्ध्वगतत्रिपताकाभ्यां विस्तारितोर्ध्वतलपताकाभ्यां च । अथवा अन्तरं-अधोंगुलिपुरस्तलपताकेन ।

अदीपयदंशुजालैः-तिर्यगधोभागे दर्शितकिंचिदूर्ध्वानीतार्धचन्द्रादधःसमानीत चलत्रिपताकेन च ।

दिक्सुन्दरी-दिग्दर्शितसूचीमुखेन स्वस्तिकीकृतपद्मकोशाभ्यां च ।

वदन-हनोरधावर्तितालपल्लवेन ।

चन्दन-परावर्तितमुष्टिभ्याम् ।

बिन्दुः-ललाटगतसूचीमुखेन ।

इन्दुः-तिर्यग्दर्शितार्धचन्द्रेण ॥

प्रसरति शशधरबिम्बे विहितविलम्बे च माधवे विधुरा ।
विरचितविविधविलापं सा परितापं चकारोच्चैः ॥

प्रसरति-विस्तारितोर्ध्वतलपताकाभ्याम् ।

शशधरबिम्बे-तिर्यगूर्ध्वदर्शितार्धचन्द्रेण ।

विहित—शनैरधस्तलीकृतपताकेन ।

विलम्बे-विलम्बगत्याचार्या ।

च-आवर्तनेन ।

माधवे—त्रिभङ्गीस्थानकेन ।

विधुरा—अधोमुखेन शिरसाङ्गचालितेन च ।

विरचित—अधोमुखहंसास्येन ।

विविध-आवेष्टितपताकेन ।

विलापं—अधोवदनशिरसा विषण्णया दृष्ट्या नेत्रादधोगत चलत्रिपताकेन ।

सा—पार्श्वगतसूचीमुखेन ।

परितापं-विधुतशिरसाभितप्तया दृष्ट्या चलदंगुलिपताकाभ्यां च ।

चकार—अधोमुखहंसास्येन ।

उच्चैः-आवेष्टितोर्ध्वगतपताकेन ॥

---

## अष्टपदी १३

कथितसमयेऽपि हरिरहह न ययौ वनम् ।
मम विफलमिदममलरूपमपि यौवनम् ॥ १ ॥

कथित-अधरात्पुरोगतहंसास्येन ।

समये-किंचिदधःसंमानीतोर्ध्वतलमृगशीर्षेण ।

अपि-आवर्तनेन ।

हरिः-त्रिभङ्गीस्थानकेन ।

अहह-विषण्णया दृष्ट्या स्कंधानतेन शिरसा ।

न—पुरस्तलकम्पितपताकेन ।

ययौ–शनैस्तिर्यगाकर्षिताधस्तलमृगशीर्षेण ।
वनं—ऊर्ध्वगतपताकाभ्याम् ।
पल्लवेन–विस्तारितपताकाभ्याम् ।
मम–जत्रुदर्शितालपल्लवेन ।
विफलं–विच्युतकपित्थेन ।
इदं–अधोंगुलिपुरस्तलपताकेन ।
अमल–लोलितसन्दंशेन ।
रूपं–शनैरङ्गदर्शितसन्दंशाभ्यां लोलितालपल्लवेन च ।
अपि–आवर्तनेन ।
यौवनं–स्वस्तिकीकृतपद्मकोशाभ्याम् ॥ १ ॥

याभि हे कमिहशरणम् ।
सखीजन वचन वञ्चिता ॥

याभि–अधोंगुलिपुरःप्रसारितपताकेन ।
हे–अधस्तलीकृतसर्पशीर्षप्रतिदर्शितपताकेन ।
कं–पार्श्वगतसूचीमुखेन ।
इह–अधोंगुलिपुरस्तलपताकेन ।
शरणं–अवधूतशिरसा हृत्स्थांजलिना ।
सखी–अधस्तलसर्पशीर्षेण ।
जन–विस्तारितपताकाभ्याम् ।
वचन–अधरात्पुरोगतहंसास्येन ।
वञ्चिता–उद्वेष्टितपताकेन ॥

यदनुगमनाय निशि गहनमपि शीलितम् ।
तेन मम हृदयमिदं असमशर कीलितम् ॥ २

यत्–तिर्यग्दर्शितसूचीमुखेन ।

अनुगमनाय—तिर्यग्गतोर्ध्वतलमृगशीर्षेण ।

निशि—ऊर्ध्वमुखविस्तारितपताकेन ।

गहनं—पल्लवेन विस्तारितपताकाभ्याम् ।

अपि—आवर्तनेन ।

शीलितं—अपाङ्गावर्तितत्रिपताकेनाध्यर्धिकाचार्या ।

तेन—पार्श्वगतसूचीमुखेन ।

मम—जत्रुदर्शितालपल्लवेन ।

हृदयं—हृद्गतसन्दंशेन ।

इदं—अधोंगुलिपुरस्तलपताकेन ।

असम—हृद्गतावेष्टितचतुरेण ।

शर—वामप्रसारितमुष्ट्यः कर्णाकृष्टखटकामुखाभ्याम् ।

कीलितं—हृल्लग्नांगुष्ठशिखरेण ॥ २ ॥

मम मरणमेव वरमिति वितथकेतना ।
किमिह विषहामि विरहानलमचेतना ॥ ३ ॥

मम—जत्रुदर्शितालपल्लवेन ।

मरणं—अश्लीलत्वात्त्यक्तम् ।

एव—आवर्तनेन ।

वरं—शनैरूर्ध्वगतालपल्लवेन ।

इति—आवर्तनेन ।

वितथ—विच्युतकिञ्चित्क्षिप्तकपित्थेन ।

केतना—ऊर्ध्वमिलितसर्पशीर्षाभ्याम् ।

किं—विच्युतकपित्थेन ।

इह—अधोंगुलिपुरस्तलकम्पितपताकेन ।

विषहामि—अङ्कसमीपे शनैरधस्तलीकृतपताकेन ।

विरह—नियुक्तसूचीमुखाभ्याम् ।
अनलं—विश्लिष्टांगुलिचलदूर्ध्वगतपताकाभ्याम् ।
अचेतना—अश्चितशिरसा ग्लानदृष्ट्या च ॥ ३ ॥

मामहह विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ ४ ॥

मां—जत्रुदर्शितालपल्लवेन ।
अहह—विषण्णया दृष्ट्या स्कंधानतेन शिरसा ।
विधुरयति—अधोमुखेन शिरसाञ्चलितेन ।
मधुर—लोलितालपल्लवेन ।
मधु—कांगूलपल्लवाभ्याम् ।
यामिनी—ऊर्ध्वमुखविस्तारितपताकेन पुरस्तलविरलांगुलिनिकुञ्चकेन च
कापि—पार्श्वगतसूचीमुखेन ।
हरिं—त्रिभङ्गीस्थानकेन ।
अनुभवति—उत्सङ्गेन मुकुलया दृष्ट्या च ।
कृत—अधोमुखहंसास्येन ।
सुकृत—अधोमुखविकसितमुकुलेन ।
कामिनी—शिरस्थादाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा च ॥

अहह कलयामि वलयादि मणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ ५ ॥

अहह—विषण्णया दृष्ट्या स्कन्धानतेन शिरसा च ।
कलयामि—हृद्गतसन्दंशेन ।
वलयादि—प्रकोष्ठगतार्धचन्द्रेण ।
मणि—चलत्कांगूलेन ।
भूषणं—प्रत्यङ्गदर्शितहंसास्याभ्याम् ।

हरि—त्रिभङ्गीस्थानकेन ।

विरह—वियुक्तसूचीमुखाभ्याम् ।

दहन—विश्लिष्टांगुलिचलदूर्ध्वपताकेन ।

दहनेन—अङ्गसमीपे शनैरधस्तलीकृतपताकाभ्याम् ।

बहु—आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।

दूषणं—विषण्णया दृष्ट्या विच्युतकपित्थेन ॥ ५ ॥

कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि दहति मामतिविषमशीलया ॥ ६ ॥

कुसुम—कांगूलेन ।

सुकुमार—चलितांगुष्ठहंसास्येन ।

तनुं—अङ्गदर्शितहंसास्येन ।

अतनु—हृद्गतावेष्टितचतुरेण ।

शर—वामप्रसारिमुष्टिदक्षिणकर्णाकृष्टखटकामुखाभ्यां सूचनया दृष्ट्या ।

लीलया—समपादाचार्या दोलहस्तकेन निहाञ्चितेन शिरसा च ।

स्रगपि—स्कन्धदेशाच्चलदधःसमानीत खटकामुखाभ्याम् ।

हृदि—हृद्गतसन्दंशेन ।

दहति—विश्लिष्टांगुलि चलदूर्ध्वगतपताकेन ।

मां—जत्रुदर्शितालपल्लवेन ।

अति—आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

विषमशीलया—अधोमुखेन शिरसा विषण्णया दृष्ट्यांगवलितेन ॥

अहमिहहि निवसामि गणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥

अहं—जत्रुदर्शितालपल्लवेन ।

विरह—नियुक्तसूचीमुखाभ्याम् ।
अनलं—विश्लिष्टांगुलिचलदूर्ध्वगतपताकाभ्याम् ।
अचेतना—अञ्चितशिरसा ग्लानदृष्टया च ॥ ३ ॥

मामहह विधुरयति मधुरमधुयामिनी ।
कापि हरिमनुभवति कृतसुकृतकामिनी ॥ ४ ॥

मां—जत्रुदर्शितालपल्लवेन ।
अहह—विषण्णया दृष्टया स्कंधानतेन शिरसा ।
विधुरयति—अधोमुखेन शिरसाञ्चलितेन ।
मधुर—लोलितालपल्लवेन ।
मधु—कांगूलपल्लवाभ्याम् ।
यामिनी-ऊर्ध्वमुखविस्तारितपताकेन पुरस्तलविरलांगुलिनिकुञ्चकेन च
कापि—पार्श्वगतसूचीमुखेन ।
हरिं—त्रिभङ्गीस्थानकेन ।
अनुभवति—उत्सङ्गेन मुकुलया दृष्टया च ।
कृत—अधोमुखहंसास्येन ।
सुकृत—अधोमुखविकसितमुकुलेन ।
कामिनी—शिरस्थादाकर्षितांचलखटकामुखेन परावृत्तेन शिरसा च ॥

अहह कलयामि वलयादि मणिभूषणम् ।
हरिविरहदहनवहनेन बहुदूषणम् ॥ ५ ॥

अहह—विषण्णया दृष्टया स्कन्धानतेन शिरसा च ।
कलयामि—हृद्गतसन्दंशेन ।
वलयादि—प्रकोष्ठगतार्धचन्द्रेण ।
मणि—चलत्कांगूलेनं ।
भूषणं—प्रत्यङ्गदर्शितहंसास्याभ्याम् ।

हरि—त्रिभङ्गीस्थानकेन ।

विरह—वियुक्तसूचीमुखाभ्याम् ।

दहन—विश्लिष्टांगुलिचलदूर्ध्वपताकेन ।

वहनेन—अङ्गसमीपे शनैरधस्तलीकृतपताकाभ्याम् ।

बहु—आवेष्टित किंचिदूर्ध्वगतपताकाभ्याम् ।

दूषणं—विषण्णया दृष्ट्या विच्युतकपित्थेन ॥ ५ ॥

कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि दहति मामतिविषमशीलया ॥ ६ ॥

कुसुम—कांगूलेन ।

सुकुमार—चलितांगुष्ठहंसास्येन ।

तनुं—अङ्गदर्शितहंसास्येन ।

अतनु—हृद्गतावेष्टितचतुरेण ।

शर—वामप्रसारिमुष्टिदक्षिणकर्णाकृष्टखटकामुखाभ्यां सूचनया दृष्ट्या ।

लीलया—समपादाचार्या दोलहस्तकेन निहाञ्चितेन शिरसा च ।

स्रगपि—स्कन्धदेशाचलदधःसमानीत खटकामुखाभ्याम् ।

हृदि—हृद्गतसन्दंशेन ।

दहति—विश्लिष्टांगुलि चलदूर्ध्वगतपताकेन ।

मां—जत्रुदर्शितालपल्लवेन ।

अति—आवेष्टितकिंचिदूर्ध्वगतपताकाभ्याम् ।

विषमशीलया—अधोमुखेन शिरसा विषण्णया दृष्ट्यांगवलितेन ॥

अहमिहहि निवसामि गणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥ ७ ॥

अहं—जत्रुदर्शितालपल्लवेन ।

इहहि—अधोंगुलिपुरस्तलपताकेन ।

निवसामि—शनैरधस्तलीकृतपताकेन ।

गणित—अंगुष्ठगणितांगुल्यूर्ध्वतलपताकेन ।

वन—पल्लवहस्तकेन विस्तारितपताकाभ्याम् ।

वेतसा—चलदूर्ध्वगतत्रिपताकाभ्याम् ।

स्मरति—हृद्गतविकासितमुकुलेन ।

मधुसूदनः—त्रिभङ्गीस्थानकेन ।

मां—जत्रुदर्शितालपल्लवेन ।

अपि—आवर्तनेन ।

न—पुरस्तल कम्पितपताकेन ।

चेतसा—हृद्गतसन्दंशेन ॥ ७ ॥

हरिचरण शरण जयदेवकविभारती ।
वसतु हृदि युवतीव कोमलकलावती ॥ ८ ॥

हरि—वैष्णवस्थानकेन ।

चरण—चरणदर्शितपताकेन ।

शरण—हृत्स्थांजलिनाऽवधूतशिरसा करुणया दृष्ट्या च ।

जयदेवकवि—ललाटस्थांजलिना ।

भारती—अधरात्पुरोगतहंसास्येन ।

वसतु—शनैरधस्तलीकृतपताकाभ्याम् ।

हृदि—हृद्गतसन्दंशेन ।

युवति—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

इव—आवर्तनेन ।

कोमल—चलितांगुष्ठहंसास्येन ।

कलावती—ललितया दृष्ट्या चतुरेण च ॥ ८ ॥

तत्किं कामपि कामिनीमभिसृतः किंवा कलाकेलिभिः
बद्धो बन्धुभिरन्धकारिणि वनोपान्ते किमुद्भ्राम्यति।
कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः॥

तत्—आवेष्टित तिर्यगूर्ध्वदर्शितसूचीमुखेन।

किं—विच्युतसन्दंशेन।

कां—पार्श्वगतंसूचीमुखेन।

अपि-आवर्तनेन।

कामिनीं—आकर्षितांचलखटकामुखेन परावृत्तेन शिरसा। अथवा स्वस्तिकीकृतपद्मकोशाभ्याम्।

अभिसृतः—वामपार्श्वस्तिर्यग्गतोर्ध्वतलमृगशीर्षेण।

किंवा—विच्युतसन्दंशेन। अथवा आवर्तनेन।

कलाकेलिभिः-ऊर्ध्वगतसूचीमुखेन मिलितांगुलितलत्रिपताकाभ्याम्।

बद्धः—आवर्तनेन कृतमुष्टिना।

बन्धुभिः-हृद्गतपताकेन।

अन्धकारिणि—ऊर्ध्वतलोर्ध्वविस्तारितपताकेन।

वनोपान्ते—चलदूर्ध्वगतत्रिपताकाभ्यां विस्तारितोर्ध्वतलपताकाभ्यां पार्श्वदेशादधोदर्शितपताकेन च।

किं—ऊर्ध्वतललोलितपताकेन।

उद्भ्राम्यति—ऊर्ध्वमुखाद्भ्रामित सूचीमुखेन। अथवा भ्रमर्याचार्या।

कान्तः—हृद्गतचतुरेण।

क्लान्तमनाः—हृद्गतसन्दंशेन ग्लानदृष्ट्या च।

मनागपि—ऊर्ध्वमुखकपित्थेनावर्तनेन च।

पथि—पार्श्वगतोर्ध्वतलमृगशीर्षेण।

प्रस्थातुं—अधोंगुलिचलत्पुरःप्रसारितपताकेन।

एव-ऊर्ध्वतलमृगशीर्षेण ।

अक्षमः—स्खलद्गत्याचार्याङ्गवलितेन च ।

सङ्केतीकृत—तिर्यग्दर्शितसूचीमुखेनाधोमुखहंसास्येन च ।

मंजु—लोलितालपल्लवेन ।

वंजुल—कम्पितोर्ध्वमुखसूचीमुखेन ।

लताकुञ्जे—लताकरोर्ध्वसमानीतमिलितमुखमृगशीर्षाभ्यां च ।

अपि-आवर्तनेन ।

यत्—ऊर्ध्वमुखसूचीमुखेन ।

न—पुरस्तलकम्पितपताकेन ।

आगतः—आकर्षितमृगशीर्षेणाकम्पितेन शिरसा च ॥

अथागतां माधवमन्तरेण सखीमियं वीक्ष्य विषादमूकाम्।
विशङ्कमाना रमितं कयापि जनार्दनं दृष्टवदेतदाह ॥

अथ-अधोंगुलिपताकेन ।

आगतां—तिर्यगाकर्षितमृगशीर्षेणाकम्पितेन शिरसा च ।

माधवं-त्रिभङ्गीस्थानकेन ।

अन्तरेण—वियुक्तसूचीमुखाभ्याम् ।

सखीं – अधस्तलसर्पशीर्षेण हृद्गतपताकेन ।

इयं—अधोंगुलिपुरस्तलपताकेन ।

वीक्ष्य—अवलोकितदृष्ट्या ।

विषादमूकां—विषण्णयादृष्ट्या ।

विशङ्कमाना—वितर्कितदृष्ट्या ।

रमितं—मिलितांगुलिवलत्रिपताकाभ्याम् ।

कयापि-पार्श्वगतसूचीमुखेन ।

जनार्दनं—त्रिभङ्गीस्थानकेन ।

दृष्टवत्—अवलोकितदृष्टया पुरोदर्शितपताकेन ।

एतत्—ऊर्ध्वतलमृगशीर्षेण ।

आह—अधरात्पुरोगतहंसास्येन ॥

---

## अष्टपदी १४

स्मर समरोचित विरचितवेषा ।
गलित कुसुमदल विलुलितकेशा ॥ १ ॥

स्मर—हृद्गतावेष्टितचतुरेण

समर—तिर्यक्प्रसारितवाममुष्टिदक्षिणकर्णाकृष्टखटकामुखाभ्यामालीढ-स्थानकेन सूचनया दृष्टया अधोमुखीकृतहंसास्येन च ।

विरचितवेषा-स्कन्धदेशाच्चलदधस्समानीत खटकामुखाभ्यां प्रत्यङ्ग-भूषणदर्शितहंसास्यार्धचन्द्राभ्यामङ्गदर्शितसन्दंशाभ्यां च ।

गलित—परावर्तिताधोमुखकर्तरीमुखेन च ।

कुसुम—कांगूलेन ।

दल—चतुरेण ।

विलुलितकेशा-शिरस्थावर्तितपरावर्तितचलदधस्समानीतारालेन ॥

कापिचपला मधुरिपुणा ।
विलसति युवति रधिकगुणा ॥

कापि—पार्श्वगतसूचीमुखेन ।

चपला-शिरस्थाकर्षितांचलखटकामुखेन विश्लिष्टयाचार्या कटाक्षेण च।

मधुरिपुणा--त्रिभङ्गीस्थानकेन ।

विलसति—हंसगत्या निहंचितशिरसा च ।

युवतिः—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

अधिक—आवेष्टितकिंचिदूर्ध्वगतपताकेन।

अधिकगुणा-हृद्यावेष्टितचतुरेण। अथवा मिलितांगुलितल त्रिपताकाभ्याम् लोलितालपल्लवेन। अथवा अधरात्पुरोगतहंसास्येन लोलितसन्दंशेन च॥

हरिपरिरम्भण वलितविकारा।
कुचकलशोपरि तरलितहारा॥२॥

हरि—त्रिभङ्गीस्थानकेन।

परिरम्भण—उत्सङ्गेन।

वलित—आवेष्टितकिंचिदूर्ध्वगतचलत्पताकाभ्यां ललितया दृष्ट्या च

विकारा—अङ्गदर्शितचलद्धंसपक्षेण। अथवा विधुतशिरसा विरलांगुलिचलत्पताकेन।

कुचकलश—स्वस्तिकीकृतपद्मकोशाभ्याम्।

उपरि-वक्षस्थलोपरिअधस्तलीकृतपताकेन।

तरलितहारा-स्कन्धदेशाच्चलन्नाभिपर्यान्तानीत खटकामुखाभ्याम्॥

विचलदलकललिताननचन्द्रा।
तदधरपानरभसकृततन्द्रा॥ २॥

विचलदलक—शिरस्थालोलित चलत्तिर्यक्प्रसारितारालेन।

ललित—लोलितालपल्लवेन।

आनन—हनोरधावर्तितालपल्लवेन।

चन्द्रा—तिर्यगूर्ध्वप्रसारितार्धचन्द्रेणोत्क्षिप्त शिरसा च।

तत्—पार्श्वगतसूचीमुखेन।

अधरपान—अधरोपरिचालितसन्दंशेनमुखसमीपे उर्ध्वाधोमुखमुकुलाभ्याम्।

रभस-हृद्गतविकसितमुकुलेन।

कृत—अधोमुखहंसास्येन ।
तन्द्रा—मदिरया दृष्टया ॥ ३ ॥

चंचलकुण्डलललित कपोला ।
मुखरितरशनजघनगतिलोला ॥ ४ ॥

चंचलकुण्डल-कर्णगतचलद्धंसास्येन ।
ललित-लोलितालपल्लवेन उत्तानवंचितेन च ।
कपोल-उत्तानवंचितेन ।
मुखरित-कर्णगतसूचीमुखेनाधरात्पुरोगतहंसास्येन च ।
रशन—कटिगतार्धचन्द्राभ्याम् । अथवा कटिदेशाच्चलत्पुरःसमानीत खटकामुखाभ्याम् ।
जघन-नितम्बहस्तेन ।
गतिलोला-समोसरितमत्तल्याचर्या* ॥ ४ ॥

दयितविलोकित लज्जितहसिता ।
बहुविधकूजित रतिरसरसिता ॥ ५ ॥

दयित-हृद्गतपताकेन स्निग्धया दृष्ट्या च । अथवा आवर्तनेन कृत-मुष्टिस्थशिखरेण स्निग्धदृष्ट्या च ।
विलोकित—अपाङ्गावर्तितचलत्त्रिपताकेन विलोकितेन च ।
लज्जित-लज्जितया दृष्टया परावृत्तेनशिरसा ।
हसिता-प्रसन्नमुखरागेण हास्यदृष्ट्या च ।
बहुविध-आवेष्टितार्किंचिदूर्ध्वगतपताकाभ्याम् ।
कूजित-कण्ठदेशाच्चलदधरपुरस्समानीतहंसास्येन ।
रतिरस-मिलितांगुलितलत्रिपताकाभ्यां ऊर्ध्वतलचतुरेण च । अथवा मुखसमीपे ऊर्ध्वाधोमुखमुकुलाभ्याम् । उत्सङ्गेन कान्तदृष्ट्या च।
रसिता-अधरात्पुरोगतहंसास्येन ॥ ५ ॥

* 'समोसरित' इति रूपं 'समप्रसृत' इति पदस्य प्राकृतम्—कल्लिनाथः ]

विपुलपुलक पृथुवेपथुभङ्गा ।
श्वसितनिमीलित विकसदनङ्गा ॥ ६ ॥

विपुल—विस्तारितोर्ध्वतलपताकाभ्याम् ।
पुलक—अङ्गदर्शितचलद्धंसपक्षेण ।
पृथु—ऊर्ध्वगतोर्ध्वतलपताकाभ्याम् ।
वेपथु—विधुतेन शिरसा विरलांगुलिचलत्पताकेन ।
भङ्गा—विनिमयेनोर्ध्वाधस्तलीकृतावर्तितपरावर्तितातिर्यक्चालितपताकाभ्याम् ।
श्वसित—मन्दंश्वासोच्छ्वासेनोद्वाहितोरसा ।
निमीलित—शनैरधस्तलीकृतपताकेन निमीलितदृष्ट्या च ।
विकसत्—ऊर्ध्वमुखविकासितमुकुलेन कान्तदृष्ट्या च ।
अनङ्गा—हृद्गतावेष्टितचतुरेण ॥ ६ ॥

श्रमजलकणभरसुभगशरीरा ।
परिपतितोरसि रतिरणधीरा ॥ ७ ॥

श्रम—श्रान्तया दृष्ट्या ।
जल—अङ्गसमीपे चलदधस्समानीत त्रिपताकेन ।
कण—अधोमुखविक्षिप्तांगुलिमुकुलेन ।
भर—अधस्तलपुरःसंलोलितपताकाभ्याम् ।
सुभग—लोलितालपल्लवेन ।
शरीरा—शरीरदर्शितहंसपक्षेण ।
परिपतित—व्यावर्तिताधोमुखकर्तरीमुखेन ।
उरसि—हृद्गतपताकेन ।
रतिरण—मिलितांगुलितलत्रिपताकाभ्याम् ।
धीरा—गजदन्तेन ॥ ७ ॥

श्री जयदेव भणित हरिरमितम् ।
कलि कलुषं जनयतु परिशमितम् ॥ ८ ॥

श्री–ऊर्ध्वगतालपल्लवेन ।
जयदेव–ललाटस्थांजलिना ।
भणितं–अधरात्पुरोगतहंसास्येन ।
हरि–त्रिभङ्गीस्थानकेन ।
रमितं–मिलितांगुलितलत्रिपताकाभ्याम् ।
कलि—ऊर्ध्वमुखमृगशीर्षेण ।
कलुषं—विधुतेनशिरसा ।
जनयतु—आवेष्टित किंचिदूर्ध्वगतपताकेन ।
परिशमितं—शनैरधस्तलीकृतपताकेन ॥ ८ ॥

विरहपाण्डु मुरारि मुखाम्बुज द्युतिरयं तिरयन्नपि वेदनाम्
विधुरतीव तनोति मनोभुवः सुहृदये हृदये मदनव्यथाम् ॥

विरह–वियुक्तसूचीमुखाभ्याम् ।
पाण्डु–विस्तारितचतुरेण ।
मुरारि–त्रिभङ्गीस्थानकेन ।
मुख—हनोरधावर्तितालपल्लवेन ।
अम्बुज–कमलवर्तनया ।
द्युतिः–विस्तारितालपल्लवाभ्याम् ।
अयं–अधोंगुलिपुरस्तलपताकेन ।
तिरयन्—बहिःक्षिप्तपताकेन ।
अपि—आवर्तनेन ।
वेदनां–अंचितेन शिरसा विषण्णया दृष्टया ।
विधुः—ऊर्ध्वदर्शितार्धचन्द्रेण ।

अतीव-आवेष्टितपताकेन ।
तनोति-ऊर्ध्वतलविस्तारितपताकेन ।
मनोभुवः-हृद्गतावेष्टित चतुरेण ।
सुहृत्-लोलितसन्दंशेन । हृद्गतपताकेन च ।
अये-अधस्तलीकृतसर्पशीर्षं प्रतिदर्शितपताकेन ।
हृदये-हृद्गतसन्दंशेन ।
मदन-हृद्गतावेष्टितचतुरेण ।
व्यथां-अङ्गवलितेन लोलितशिरसा ग्लानदृष्ट्या च ॥

---

## अष्टपदी १५

समुदित मदने रमणीवदने चुम्बनवलिताधरे ।
मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ॥१॥

समुदित-ऊर्ध्वमुखविकासितमुकुलेन ।
मदने-हृद्गतावेष्टित चतुरेण ।
रमणी—हृत्समीपे स्वस्तिकीकृतपद्मकोशाभ्याम् ।
वदने- हनोरधावर्तितालपल्लवेन ।
चुम्बन वलित-अधरसमीपे शनैरधोमुखमुकुलाभ्याम् ।
अधरे- अधरोपरि चालितसन्दंशेन ।
मृगमद—दर्शितमृगशीर्षेण नासागतहंसास्येन ।
तिलकं-ललाटस्थत्रिपताकेन ।
लिखति-सम्मुखपताकोपरिचलत्तिर्यग्गतखटकामुखेन ।
सपुलकं-अङ्गदर्शितचलद्धंसपक्षेण ।
मृग—मृगशीर्षेण ।
इव-आवर्तनेन ।
रजनीकरे-अर्धचन्द्रेण ॥ १ ॥

रमते यमुना पुलिनवने । विजयी मुरारिरधुना ॥

रमते—मिलितांगुलितलत्रिपताकाभ्याम् ।

यमुना—तिर्यगूर्ध्वमुखावर्तितसूचीमुखाच्चलदधस्समानीतत्रिपताकेन ।

अथवा मकरहस्तकेन ।

पुलिन-अधोमुखनिष्पेषितसन्दंशौ विस्तारितोर्ध्वतलपताकाभ्याम् ।

वने-पल्लवहस्तकेन विस्तारितपताकाभ्याम् च ।

विजयी—आवेष्टितोर्ध्वतलपताकाभ्याम् ।

मुरारिः—त्रिभङ्गीस्थानकेन ।

अधुना-ऊर्ध्वतलदर्शितमृगशीर्षेण ॥

घनचयरुचिरे रचयति चिकुरे तरलित तरुणानने ।

कुरबककुसुमं चपलासुषमं रतिपति मृगकानने ॥ २ ॥

घन-ऊर्ध्वमुखविस्तारितपताकाभ्याम् ।

चय—ऊर्ध्वाधस्तलमिलितपताकाभ्याम् ।

रुचिरे-लोलितसन्दंशेन ।

रचयति—शिरोदर्शितहंसास्येन ।

चिकुरे—शिरोभागाच्चलदधस्समानीतारालेन ।

तरलित—चलत्रिपताकेन ।

तरुणानने-हनोरधावर्तितालपल्लवेन ।

कुरबक-अधोर्ध्वदर्शितार्धचन्द्राभ्याम् ।

कुसुमं-कांगुलेन ।

चपला-ऊर्ध्वमुखचलत्रिपताकेन ।

सुषमं-लोलितालपल्लवेन ।

रतिपति—हृद्गतावेष्टितचतुरेण ।

मृग–मृगशीर्षेण ।

कानने—चलदूर्ध्वगत त्रिपताकाभ्यां विस्तारितपताकाभ्यां च ॥२॥

घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते।
मणिगणममलं तारकपटलं नखपदशशिभूषिते ॥ ३ ॥

घटयति–मिलितसूचीमुखाभ्याम् ।

सुघने–स्तनादधःपृथुदर्शितालपल्लवाभ्याम् ।

कुचयुग—स्वस्तिकीकृतपद्मकोशाभ्याम् ।

गगने—ऊर्ध्वविस्तारितपताकेन ।

मृगमद–दर्शितमृगशीर्षान्येननासापुरोगतहंसास्येन ।

रुचि—लोलितसन्दंशेन ।

रूषिते—अङ्गलेपितहंसपक्षेण ।

तारकपटलं—ऊर्ध्वदर्शितखटकामुखेन ।

नखपद—उरसि दर्शितोर्णनाभेन ।

शशि—तिर्यगूर्ध्वगतार्धचन्द्रेण ।

भूषिते—लोलितालपल्लवेन ॥ ३ ॥

जित बिसशकले मृदुभुजयुगले करतलनलिनीदले ।
मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ॥ ४ ॥

जित—बहिः क्षिप्तत्रिपताकेन ।

बिस—कमलवर्तनया चलदधस्समानीतसन्दंशेन ।

शकले—झटिति विश्लेषितसूचीमुखाभ्याम् ।

मृदु—चलदंगुष्ठहंसास्याभ्याम् ।

भुज—भुजदर्शितपताकेन ।

युगले—पुरस्तलदर्शितत्रिपताकेन ।

करतल—परस्परादर्शितत्रिपताकेन ।

नलिनीदले—कमलवर्तनया चतुरेण च ।

मरकत—ऊर्ध्वदर्शितचलत्कांगुलेन ।

वलयं—प्रकोष्ठगतार्धचन्द्रेण ।

मधुकर—भ्रमद्भ्रमरेण ।

निचयं—आवर्तनेन कृतमुष्टिना ।

वितरति—अधोमुख विकसितमुकुलेन ।

हिमशीतले—विधुतशिरसा चलदूर्ध्वगतपताकाभ्याम् ॥ ४ ॥

रतिगृहजघने विपुलापघने मनसिजकनकासने ।
मणिमयरसनं तोरणहसनं विकिरति कृतवासने ॥५॥

रति—मिलितांगुलितलत्रिपताकाभ्याम् ।

गृह—ऊर्ध्वमीलितमुखमृगशीर्षाभ्याम् ।

जघने—नितम्बहस्तकेन ।

विपुलापघने—ऊर्ध्वतलाविस्तारितपताकाभ्याम् ।

मनसिज—हृद्यावेष्टित चतुरेण ।

कनकासने—प्रकोष्ठेचालितसन्दंशेन ।

मणिमय—चलत्कांगुलेन ।

रसनं—कटिस्थितार्धचन्द्रेण । अथवा पार्श्वभागाच्चलत्पुरस्समानीत खटकामुखाभ्याम् ।

तोरण—वामदेशोर्ध्वगतचलाद्विस्तारितचतुरेण ।

हसनं—प्रसन्नमुखरागेण ।

विकिरति—परस्परसम्मुखात्तिर्यङ्मिलितहंसास्याभ्यां कटिसमीपे ।

कृतवासने—नासागतहंसास्येन ॥ ५ ॥

चरण किसलये कमलानिलये नखमणिगणपूजिते ।
बहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥६॥

चरण—चरणदर्शितपताकेन ।
किसलये—पल्लवहस्तकेन ।
कमला—लोलितालपल्लवेन । अथवा आयतस्थानकेन ।
निलये—ऊर्ध्वमीलितमृगशीर्षाभ्याम् ।
नख—ताम्रचूडेन ।
मणि—चलत्कांगूलेन ।
गण—आवर्तनेन कृतमुष्टिना ।
पूजिते—अधोमुखमुकुलाभ्याम् ।
बहिः—विस्तारितपताकेन ।
अपवरणं—शनैरधस्तलीकृतपताकाभ्याम् ।
यावकभरणं—चरणदर्शितकर्तरीमुखेन ।
जनयति—आवेष्टितोर्ध्वगतपताकाभ्याम् ।
हृदि—हृत्स्थितसन्दंशेन ।
योजिते—मीलितसूचीमुखाभ्याम् ॥ ६ ॥

रमयति सुभृशं कामपि सुदृशं खलु हलधरसोदरे ।
किमफलमवसं चिरमिहविलसन्वदसखि विटपोदरे ॥

रमयति—ऊर्ध्वतलमीलितत्रिपताकाभ्याम् ।
सुभृशं—मिलितसूचीमुखाभ्याम् ।
कामपि—पार्श्वगतसूचीमुखेन ।
सुदृशं—नेत्रान्ते लोलितचतुरेण ।
खलु—अधस्तलीकृतपताकेन ।

हलधर—स्कन्धस्थितारालेन ।

सोदरे—मिलितसूचीमुखाभ्याम् ।

किं—विच्युतकपित्थेन ।

अफलं—उद्वेष्टितपताकेन ।

अवसं—शनैरधस्तलीकृतपताकेन ।

चिरं—आवेष्टितोर्ध्वतलपताकेन ।

इह—अधोंगुलिपुरस्तलदर्शितपताकेन ।

विरसं—उद्वेष्टिताङ्गुलितेन विषण्णया दृष्ट्या च ।

वद—अधरात्पुरोगतहंसास्येन ।

सखि—अधस्तलीकृतसर्पशीर्षेण हृद्गतपताकेन ।

विटपोदरे—लताकरचालितोर्ध्वाग्रमिलितेन ॥ ७ ॥

> इहरसभणने कृतहरिगुणने मधुरिपुपदसेवके ।
> कलियुगचरितं निरसतु दुरितं कविनृपजयदेवके ॥८॥

इह—पुरस्तलदर्शितपताकेन ।

रस—लोलितचतुरेण ।

भणने—अधरात्पुरोगतहंसास्येन ।

कृत—अधोमुखहंसास्येन ।

हरि—त्रिभङ्गीस्थानकेन ।

गुणने—विस्तारितपताकाभ्याम् ।

मधुरिपु—शिरस्थांजलिना ।

पद—चरणदर्शितपताकेन ।

सेवके—हृत्स्थांजलिना ।

कलियुगचरितं—विस्तारितपताकाभ्याम् ।

निरस्तु—उद्वेष्टितपताकेन ।

दुरितं—चलत्पताकेन विधुतेन शिरसा ।

कवि—अधरात्पुरोगतहंसास्येन ।

नृप—आवेष्टितमुष्ट्योपरिशिखरेण ।

जयदेवके—ललाटस्थकपोतेनावधूतेन शिरसा ॥ ८ ॥

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् ।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणैः
उत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥

न—पुरस्तलकम्पितपताकेन ।

आयातः—तिर्यगाकर्षितमृगशीर्षेणाकम्पितेनशिरसा ।

सखि—अधस्तलदर्शितसर्पशीर्षेण हृद्गतपताकेन च ।

निर्दयः—हृद्युद्वेष्टितपताकेन ।

यदि—ऊर्ध्वतलमृगशीर्षेण ।

शठः—आवर्तनेन कृतशिखरेणोद्वेष्टितपताकेन च ।

त्वं दूति—अधस्तलसर्पशीर्षप्रतिदर्शितपताकेन ।

किं—विच्युतकपित्थेन ।

दूयसे—अधोमुखेन शिरसा ।

स्वच्छन्दं—हृद्गतपताकेन आवेष्टितोर्ध्वगतपताकेन च ।

बहु—आवेष्टितोर्ध्वगतपताकेन ।

वल्लभः—हृद्गतपताकेन ।

सः—पार्श्वगतसूचीमुखेन ।

रमते—मिलितांगुलितलत्रिपताकाभ्याम् ।

किं—लोलितोर्ध्वतलपताकेन ।

तत्र–तिर्यग्दर्शितसूचीमुखेन ।
ते–अधस्तलीकृतसर्पशीर्षप्रतिदर्शितपताकेन ।
दूषणं–विच्युतकपित्थेन ।
पश्य–अपाङ्गे लोलितचतुरेण ।
अद्य–ऊर्ध्वतलमृगशीर्षेण ।
प्रिय–हृद्गतपताकेन ।
सङ्गमाय–मिलितसूचीमुखाभ्याम् ।
दयितस्य–हृद्गतपताकेन ।
आकृष्यमाणं गुणैः–तिर्यक्प्रसारिताकर्षितखटकामुखेन ।
उत्कण्ठा–कण्ठस्थितसन्दंशेन ।
आर्ति–कातरया दृष्ट्या ।
भरात्–पुरोधस्तलमिलितपताकाभ्याम् ।
इव–आवर्तनेन ।
स्फुटत्–विकसितमुकुलेन ।
इदं–पुरोदर्शितपताकेन ।
चेतः–हृद्गतसन्दंशेन ।
स्वयं–वक्षोगतपताकेन ।
यास्यति–अधोङ्गुलि पुरःप्रसारितपताकेन ॥

> रिपुरिव सखी संवासोऽयं शिखीव हिमानिलो
> विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते ।
> हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्
> कुवलयदृशां वामः कामो निकामनिरंकुशः ॥

रिपुः–स्कन्धदेशात्तिर्यगधस्समानीताधस्तलपताकेन ।
इव–आवर्तनेन ।

सखीसंवासः—अधस्तलसर्पशीर्षेण हृद्गतपताकेन मण्डलीकृतोर्ध्वतल पताकाभ्याम् ।
अयं-अधोंगुलिपुरस्तलदर्शितपताकेन ।
शिखी—विरलांगुलिचलदूर्ध्वगतपताकाभ्याम् ।
इव—आवर्तनेन।
हिमानिलः-तिर्यक्प्रसारित चलत्पुरःसमानीतत्रिपताकेन विधुत· शिरसा च ।
विषं-सर्पशीर्षाच्चलदधस्समानीत त्रिपताकेन ।
इव-आवर्तनेन ।
सुधारश्मिः-दर्शितार्धचन्द्रेण ।
यस्मिन्—पार्श्वगतसूचीमुखेन ।
दुनोति—अंचितेन शिरसा विषण्णया दृष्ट्या ।
मनोगते—हृद्गतसन्दंशेन ।
हृदयं-हृद्गतसन्दंशेन ।
अदये-हृदयादावेष्टितपताकेन ।
तस्मिन्-पार्श्वगतसूचीमुखेन ।
एवं-ऊर्ध्वतलमृगशीर्षेण ।
पुनः- वारंवारमावेष्टितपताकेन ।
वलते-आवेष्टितोर्ध्वतलपताकेन ।
बलात्-विस्तारितपताकाभ्याम् ।
कुवलयदृशां—कमलवर्तनया नेत्रांचले लोलितत्रिपताकेन ।
वामः—ताम्रचूडेन ।
कामः—हृद्यावेष्टितचतुरेण ।
निकामं-आवेष्टितोर्ध्वगतपताकाभ्याम् ।
निरंकुशः—पुरस्तलऊर्ध्वांगुलिलोलितपताकेनाकर्षितताम्रचूडेन ॥

# अष्टपदी १६

अनिलतरलकुवलय नयनेन ।
तपति न सा किसलय शयनेन ॥

अनिल—तिर्यक्प्रसारिताधस्तलचलत्रिपताकेन ।
तरल-विश्लिष्टांगुलिकम्पितत्रिपताकेन ।
कुवलय-कमलवर्तनया ।
नयनेन-तिर्यग्गतदृष्ट्या अपाङ्गेचलत्रिपताकेन ।
तपति-विधुतेन शिरसा विश्लिष्टांगुलिचलदूर्ध्वगतपताकेन ।
न-पुरस्तल लोलितपताकेन ।
सा-पार्श्वगतसूचीमुखेन ।
किसलय-पल्लवहस्तकेन ।
शयनेन-स्कन्धानतेन शिरसा कपोलगतार्धचन्द्रेण । अथवा सुप्त-स्थानकेन ।

सखि या रमिता वनमालिना ॥

सखि—अधस्तल सर्पशीर्षेण हृद्गतपताकेन च ।
या-पार्श्वगतसूचीमुखेन ।
रमिता-मिलितांगुलितलत्रिपताकाभ्याम् ।
वनमालिना-त्रिभङ्गीस्थानकेन स्कन्धदेशाच्चलज्जानुपर्यन्तानीत खटकामुखाभ्याम् ॥

विकसितसरसिजललितमुखेन ।
स्फुटति न सा मनसिजविशिखेन ॥ २ ॥

विकासित—विकसितमुकुलेन ।

सरसिज—कमलवर्तनया।

ललित— लोलितालपल्लवेन।

मुखेन— हनोरधावर्तितालपल्लवेन।

स्फुटति—हृदयाभिमुखांगुष्ठशिखरेण।

न—पुरस्तलकम्पितपताकेन।

सा—पार्श्वगतसूचीमुखेन।

मनसिज—हृद्यावेष्टितचतुरेण।

विशिखेन-वामप्रसारितमुष्टिदक्षिणाकर्णाकृष्ट खटकामुखाभ्याम् ॥२॥

अमृतमधुरतर मृदुवचनेन।
ज्वलति न सा मलयजपवनेन ॥ ३ ॥

अमृत—तिर्यगूर्ध्वदर्शितार्धचन्द्रेण।

मधुरतर—लोलितसन्दंशेन।

मृदु—चालितांगुष्ठहंसास्येन।

वचनेन— अधरात्पुरोगतहंसास्येन।

ज्वलति—ऊर्ध्वगतचलद्विश्लिष्टांगुलिपताकेन।

न—पुरस्तललोलितपताकेन।

सा—पार्श्वगतसूचीमुखेन।

मलयजपवनेन—ऊर्ध्वदर्शितालपल्लवादुपरितिर्यग्गताधस्तलचलत्त्रि-
पताकेन ॥ ३ ॥

स्थल जलरुह रुचिकर चरणेन।
लुठति न सा हिमकर किरणेन ॥ ४ ॥

स्थल—अधोंगुलिपुरस्तलदर्शितपताकेन।

जलरुह—कमलवर्तनया।

रुचि—लोलितालपल्लवेन ।

कर—करदर्शितपताकेन ।

चरणेन—चरणदर्शित पताकेन ।

लुठति—लताकरेणाङ्गवलितेन ।

न—पुरस्तलकम्पितपताकेन ।

सा—पार्श्वगतसूचीमुखेन ।

हिमकरकिरणेन-दर्शितचन्द्राचलदधस्समानीत त्रिपताकेन ॥४॥

सजल जलद समुदय रुचिरेण ।
दलति न सा हृदि विरह भरेण ॥ ५ ॥

सजलजलद-ऊर्ध्वस्थितशिथिलांगुल्यधस्तलपताकाभ्याम् ।

समुदय-ऊर्ध्वविस्तारितपताकाभ्याम् ।

रुचिरेण-लोलितसन्दंशेन ।

दलति-झटिति वियुक्तसूचीमुखाभ्याम् ।

न-पुरस्तलकम्पितपताकेन ।

सा-पार्श्वगतसूचीमुखेन ।

हृदि-हृद्गतसन्दंशेन ।

विरह-वियुक्तसूचीमुखाभ्याम् ।

भरेण-पुरोमिलिताधस्तलीकृत लोलितपताकाभ्याम् ॥ ५ ॥

कनकनिकषरुचि शुचि वसनेन ।
श्वसति न सा परिजन हसनेन ॥ ६ ॥

कनकनिकष-ऊर्ध्वतलपताककरभोपरिलोलितसन्दंशेन ।

रुचि-लोलितालपल्लवेन ।

शुचि-लोलितसन्दंशेन ।

वसनेन–शिरस्थलाकर्षितांचल खटकामुखेन ।

श्वसति—श्वासोच्छ्वासेन ।

न–पुरस्तलकम्पितपताकेन ।

सा–पार्श्वगतसूचीमुखेन ।

परिजन–अधस्तलीकृतसर्पशीर्षेणं प्रसारितपताकाभ्याम् ।

हसनेन–प्रसन्नमुखरागेण ॥ ६ ॥

सकलभुवन जनवरतरुणेन ।
वहति न सा रुजमतिकरुणेन ॥ ७ ॥

सकल–विस्तारितोर्ध्वतलपताकेन ।

भुवन—ऊर्ध्वतलसम्भ्रामितसूचीमुखेन ।

जन—ऊर्ध्वतलविस्तारितपताकाभ्याम् ।

वरतरुणेन—लोलितालपल्लवेन मत्तल ाचार्या मदिरया दृष्ट्या च ।

वहति— स्कन्धगतालपल्लवेन ।

न—पुरस्तल कम्पितपताकेन ।

सा—पार्श्वगतसूचीमुखेन ।

रुजं—अंचितेन शिरसा ।

अति–आवेष्टितपताकेन ।

करुणेन—करूणया दृष्ट्या ॥ ७ ॥

श्री जयदेव वचनरचनेन ।
प्रविशतु हरिरपि हृदयमनेन ॥ ८ ॥

श्री—ऊर्ध्वगतालपल्लवेन ।

जयदेव--ललाटस्थांजलिनावधूतेन शिरसा ।

वचन—अधरात्पुरोगतहंसास्येन ।

रचनेन—परस्परामिलितमुखाविलोकितहंसास्याभ्याम् ।

प्रविशतु—कर्णगतहंसास्येन हृद्गतसन्दंशेन च ।

हरिः—त्रिभङ्गीस्थानकेन ।

अपि—आवर्तनेन ।

हृदयं—हृद्गतसन्दंशेन ।

अनेन—पुरस्थितोर्ध्वतलमृगशीर्षेण ॥ ८ ॥

मनोभवानन्दनचन्दनानिल
प्रसीद रे दक्षिण मुञ्च वामताम् ।
क्षणं जगत्प्राण निधाय माधवं
पुरो मम प्राणहरो भविष्यसि ॥

मनोभवानन्दन—हृद्यावेष्टितचतुरेण विकसितमुकुलेन च ।

चन्दनानिल—आवर्तितमुष्टिभ्यां चलदूर्ध्वगतपताकाभ्यां तिर्यक्प्रसारितपताकेन चलत्पुरस्समानीत तेनैव ।

प्रसीद—पुष्पपुटेन ।

रे—पुरःप्रसारितपताकेन ।

दक्षिण—तिर्यक्प्रसारित पुरस्समानीतचलत्रिपताकेन ।

मुञ्च—शनैर्विच्युतमुष्टिना ।

वामतां—ताम्रचूडेन ।

क्षणं—विच्युतकपित्थेन ।

जगत्प्राण—पुरोविस्तारितपताकाभ्याम् हृद्गतमुकुलेन ।

निधाय—शनैरधस्तलीकृतपताकेन ।

माधवं—त्रिभङ्गीस्थानकेन ।

पुरः—पुरःप्रसारितपताकेन ।

मम—जत्रुदर्शितालपल्लवेन ।

प्राणहर—हृद्गतसन्दंशेन तिर्यक्प्रसारितमुष्टयाकर्षितेन ।

भविष्यसि—किंचिदावेष्टितोर्ध्वतलपताकेन ॥

बाधां विधेहि मलयानिल पञ्चबाण
प्राणान् गृहाण न गृहं पुनराश्रयिष्ये ।
किं ते कृतान्तभगिनि क्षमया तरङ्गैः
अङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥

बाधां—अधोमुखशिरसा विषण्णया दृष्टया च ।

विधेहि—शनैरधस्तलीकृतपताकेन ।

मलयानिल—ऊर्ध्वस्थितालपल्लवोपरिचलत्तिर्यक्प्रसारितत्रिपताकेन ।

पञ्चबाण—विरलांगुलि पुरस्तलपताकेन । वामप्रसारितमुष्टया कर्णाकृष्टखटकामुखाभ्याम् ।

प्राणान्—हृद्गतमुकुलेन ।

गृहाण—अधोभागात्किंचिदूर्ध्वानीतमुष्टिना ।

न—पुरस्तलकम्पितपताकेन ।

गृहं—ऊर्ध्वमिलितमृगशीर्षाभ्याम् ।

पुनः—वारंवारावेष्टितोर्ध्वतलपताकेन ।

आश्रयिष्ये—अधस्तलीकृतपताकेन ।

किं ते—विच्युतसन्दंशेन पुरोवर्तितपताकेन ।

कृतान्तभगिनि—क्रुद्धया दृष्टया अधोंगुलिपुरःप्रसारितत्रिपताकेन ।

क्षमया—हृत्समीपे शनैरधस्तलीकृतपताकेन ।

तरङ्गैः—परस्परानुगच्छच्चलदंगुल्यूर्ध्वाधस्तलपताकेन ।

अङ्गानि—अङ्गदर्शितहंसपक्षेण ।

सिञ्च—विक्षिप्तांगुलिमुकुलेन ।

मम—हृद्गतपताकेन ।

शाम्यतु-शनैरधस्तलीकृतपताकेन ।

देह—स्कन्धमूलदर्शितालपल्लवेन ।

दाहः-अभितप्तया दृष्ट्या विधुतेन शिरसा चलद्भिरलांगुलि पताकाभ्याम्

अथ कथमपि यामिनीं विनीय
स्मरशरजर्झरितापि सा प्रभाते ।
अनुनयवचनं वदन्तमग्रे
प्रणतमपि प्रियमाह साभ्यसूयम् ॥

अथ—पुरोवर्तितपताकेन ।

कथमपि—आवेष्टितपताकेन ।

यामिनीं—ऊर्ध्वतलविस्तारित पताकेनोर्ध्वांगुलि पुरस्तलनिकुंचितेन ।

विनीय—उद्वेष्टितपताकेन ।

स्मर – हृद्यावेष्टित चतुरेण ।

शर—शराकर्षणमुद्रया ।

जर्झरित-हृदयदेशे द्वित्रिवारं लग्नांगुष्ठ शिखरेणाङ्कवलितेन च ।

अपि—आवर्तनेन ।

सा—पार्श्वगतसूचीमुखेन ।

प्रभाते—विस्तारितपताकाभ्याम् ।

अनुनय—शनैरधस्तलीकृतपताकेन ।

वचनं—अधरात्पुरोगतहंसास्येन ।

वदन्तं—अधरात्पुरोगतहंसास्येन ।

अग्रे—पुरस्तलदर्शितपताकेन ।

प्रणतं – ललाटस्थांजलिनाऽवधूतेन शिरसा ।

अपि–आवर्तनेन ।

प्रियं–हृद्गतपताकेन ।

आह – अधरात्पुरोगतहंसास्येन ।

साभ्यसूयं–क्रुद्धया दृष्ट्या ॥

---

## अष्टपदी १७

रजनिजनितगुरु जागररागकषायितमलसनिमेषम् ।
वहति नयनमनुरागमिवस्फुट मुदितरसाभिनिवेशम् ॥१॥

रजनि–पृष्ठगतपताकेन ।

जनित – ऊर्ध्वगतालपल्लवेन ।

गुरु–ऊर्ध्वगतप्रसारित पताकेन ।

जागर–अलस दृष्ट्या ।

राग–हृद्गतसन्दंशेन ।

कषायितं–लोहितदृष्ट्या ।

अलस–अलसदृष्ट्या ।

निमेषं–नयनाधोगत कपित्थेन ।

वहति–स्कन्धगतालपल्लवेन ।

नयनं–अपाङ्गावर्तित चलत्रिपताकेन ।

अनुरागं–हृद्गतसन्दंशेन ।

इव–आवर्तनेन ।

स्फुटं–प्रसारिततिर्यग्गतपताकेन ।

उदित–ऊर्ध्वमुखविकसितमुकुलेन ।

रसाभिनिवेशं – हृद्गतावेष्टिताधोमुखचतुरेण ॥ १ ॥

याहिमाधव याहिकेशव मावद कैतववादम् ।
तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥

याहि—तिर्यगावेष्टितपताकेन ।

माधव—त्रिभङ्गीस्थानकेन ।

याहि —पूर्ववत् ।

केशव—केशबन्धेन ।

मा—जवेनोर्ध्वांगुलिपुरस्तलकम्पितपताकेन ।

वद—अधरात्पुरोगतहंसास्येन ।

कैतव वादं—

तां—पार्श्वगतसूचीमुखेन ।

अनुसर—तिर्यक्पुरोगतस्सन् पताकेन ।

सरसीरुह—कमलवर्तनया ।

लोचन—अपाङ्गचलत्रिपताकेन ।

या—पार्श्वगतसूचीमुखेन ।

तव—पुरस्तलदर्शितपताकेन ।

हरति-पुरोगतालपल्लवावर्तनपरावर्तनेन ।

विषादं—विषण्णया दृष्ट्या अधोमुखेन शिरसाञ्चालितेन ॥

कज्जलमलिन विलोचन चुम्बन विरचित नीलिमरूपम् ।
दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥२॥

कज्जल—नयनगतसन्दंशेन ।

मलिन—मिलितसूचीमुखाभ्याम् ।

विलोचन—अपाङ्गावर्तितचलत्रिपताकेन ।

चुम्बन—अधरसमीपे ऊर्ध्वाधोमुखमुकुलाभ्याम् ।

विरचित—अधोमुखहंमास्येन ।

नीलिम—ऊर्ध्वतलविस्तारितपताकाभ्याम् ।

रूपं—अङ्गदर्शितसन्दंशेन ।

दशन—अधरोपरि चालितसन्दंशेन ।

वसनं—अधरसमीपे अधस्तलीकृतचतुरेण ।

अरुणं—निष्पेषिताग्रसन्दंशाभ्याम् ।

तव—पुरस्तलदर्शितपताकेन ।

कृष्ण—त्रिभङ्गीस्थानकेन ।

तनोति—लोलितालपल्लवेन विस्तारितपताकेन च ।

तनोः—अङ्गदर्शितपताकेन ।

अनुरूपं—मिलितसूचीमुखाभ्याम् ॥ २ ॥

वपुरनुहरति तव स्मरसङ्गर खरनखरक्षतरेखम् ।
मरकत शकलकलित कलधौतलिपेरिव रतिजयलेखम् ॥३॥

वपुः—अङ्गदर्शितपताकेन ।

अनुहरति—मिलितत्रिपताकाभ्याम् ।

तव—पुरस्तलदर्शितपताकेन ।

स्मर—हृद्गतावेष्टितचतुरेण ।

सङ्गर—वाम .... ... .... .... ....

Sri Vidya Press. Kumbakonam

॥ श्रीः ॥

# श्लोकानां, अष्टपदी प्रबन्धानाञ्च अकरादिक्रमेण अनुक्रमणिका


| | पुट |
|---|---|
| **अ** | |
| अङ्गेष्वाभरणं (श्लो) | 103 |
| अत्रान्तरे (श्लो) | 109 |
| अथतां (श्लो) | 102 |
| अथकथमपि (श्लो) | 139 |
| अथागतां (श्लो) | 118 |
| अनिलतरल | 133 |
| अनेकनारी (श्लो) | 30 |
| अभिनव | 18 |
| अमलकमल | 16 |
| अमृतमधुर | 134 |
| अलसनिमीलित | 53 |
| अविरल | 72 |
| अहमिह (श्लो) | 86 |
| अहमिह | 115 |
| अहह | 114 |
| **आ** | |
| आवासो (श्लो) | 79 |
| **इ** | |
| इतस्ततः (श्लो) | 57 |
| इहरस | 129 |
| **उ** | |
| उन्मदमदन | 23 |
| उन्मीलन्मधु (श्लो) | 21 |
| उरसिमुरारेः | 97 |
| **क** | |
| कज्जल | 141 |
| कथितसमये | 111 |
| कनक | 135 |
| कन्दर्पज्वर (श्लो) | 85 |
| करतल | 37 |
| कापिकपोल | 36 |
| कापिचपला | 119 |
| कापिविलास | 35 |
| कालिय विष | 15 |
| किंकरिष्यति | 62 |
| किसलय | 52 |
| कुसुमविशिख | 73 |
| कुसुमसुकुमार | 115 |
| केलिकला | 36 |
| कोकिलकल | 54 |
| कंसारिरपि (श्लो) | 57 |
| क्षणमपि (श्लो) | 78 |
| क्षत्रियरुधिर | 9 |
| क्षम्यतामपरं | 66 |
| क्षितिरति | 6 |

| | पृष्ठ |
|---|---|
| **ग** | |
| गणयति (श्लो) | 49 |
| गोपकदम्ब | 42 |
| **घ** | |
| घटयति | 126 |
| घनचय | 125 |
| **च** | |
| चञ्चलकुण्डल | 121 |
| चन्दनचर्चित | 33 |
| चन्द्रकचारु | 41 |
| चरणकिसलये | 128 |
| चरणरणित | 54 |
| चिन्तयामि | 63 |
| **छ** | |
| छलयसि | 8 |
| **ज** | |
| जनकसुता | 17 |
| जलदपटल | 44 |
| जितबिस | 126 |
| **त** | |
| तवकर | 8 |
| तव चरणे | 18 |
| तानिस्पर्श (श्लो) | 68 |
| तर्तिकमपि (श्लो) | 117 |
| तन्वीखिन्नं | 64 |
| तामहं हृदि | 63 |
| त्यजति च | 83 |
| त्वदभिसरण | 105 |
| त्वद्वाम्येन (श्लो) | 92 |
| त्वरितमुपैति | 107 |
| **द** | |
| दहति शिशिर | 88 |
| दर विदलित (श्लो) | 20 |
| दयित विलोकित | 121 |
| दिनमणि | 15 |
| दिशिदिशि | 82 |
| दुरालोक (श्लो) | 46 |
| दृश्यसे पुरतो | 65 |
| **ध** | |
| धीरसमीरे | 94 |
| ध्यानलयेन | 75 |
| ध्वनतिमधुप | 89 |
| **न** | |
| नयन विषयं | 82 |
| नामसमेतं | 95 |
| नाथहरे | 105 |
| नायातः सखि (श्लो) | 130 |
| नित्योत्सङ्ग (श्लो) | 29 |
| निन्दतिचन्दनं | 71 |
| निन्दसियज्ञ | 11 |
| निभृत निकुञ्ज | 50 |

| | पुट |
|---|---|
| **प** | |
| पततिपतत्रे | 95 |
| पश्यति दिशि | 104 |
| पद्मापयो (श्लो) | 13 |
| पाणौ मा कुरु (श्लो) | 60 |
| पीनपयोधर | 34 |
| पूर्वं यत्र (श्लो) | 91 |
| प्रतिपदं | 76 |
| प्रथम समागम | 52 |
| प्रलयपयोधि | 6 |
| प्रसरति (श्लो) | 110 |
| **ब** | |
| बाधां विधेहि (श्लो) | 138 |
| **भ** | |
| भणति कवि | 90 |
| भवति विलंबिनि | 108 |
| भ्रूचापे निहितः | 67 |
| भ्रूपल्लवं (श्लो) | 69 |
| **म** | |
| मणिमय | 44 |
| मदनमही | 25 |
| मधुमुर | 16 |
| मनोभव (श्लो) | 137 |
| मम मरणं | 113 |
| माधविका | 26 |
| मामियं | 61 |
| मामहह | 114 |
| मुखरमधीरं | 96 |
| मुहुरवलोकित | 106 |
| मृगमद | 24 |
| मेघैर्मेदुरं (श्लो) | 1 |
| म्लेच्छ निवह | 12 |
| **य** | |
| यदनुगमनाय | 112 |
| यदि हरि (श्लो) | 4 |
| यमुनातीर (श्लो) | 70 |
| यामि हे | 112 |
| याहि माधव | 141 |
| **र** | |
| रजनिज नित | 140 |
| रतिगृह | 127 |
| रतिसुख | 93 |
| ,, | 55 |
| रमते यमुना | 125 |
| रमयति | 128 |
| राधिका | 80 |
| रासे हरि | 41 |
| रासोल्लास (श्लो) | 32 |
| रिपुरिव (श्लो) | 131 |
| **ल** | |
| ललितलवङ्ग | 22 |
| **व** | |
| वर्णितं जयदेवकेन | 66 |

| | पुट |
|---|---|
| वपुरनु | 142 |
| वसतिदशन | 7 |
| वसन्ते (श्लो) | 19 |
| वसति विपिन | 89 |
| वहति च | 74 |
| वहति मलय | 87 |
| वहसि वपुषि | 10 |
| वाग्देवता (श्लो) | 3 |
| विगलित | 98 |
| विगलित | 26 |
| विकसित | 133 |
| विकिरति (श्लो) | 100 |
| विचलदलक | 120 |
| वितरसि | 10 |
| विपुलपुलक | 122 |
| ,, | 43 |
| ,, (श्लो) | 109 |
| विरहपाण्डु (श्लो) | 123 |
| विलिखति | 75 |
| विशदकदम्ब | 45 |
| विश्वेषामनु (श्लो) | 31 |
| विहरति | 23 |
| ,, (श्लो) | 39 |
| विहित विशद | 106 |
| वेदानुद्धरते (श्लो) | 4 |
| **श** | |
| श्रमजल | 122 |
| श्रितकमला | 14 |
| श्रीजयदेव | 12 |
| ,, | 19 |
| ,, | 28 |
| ,, | 38 |
| ,, | 46 |
| ,, | 56 |
| ,, | 77 |
| ,, | 84 |
| ,, | 99 |
| ,, | 108 |
| ,, | 123 |
| श्रीजयदेव | 137 |
| श्लिष्यति कामपि | 38 |
| श्लिष्यति चुंबति | 107 |
| श्वसितपवन | 18 |
| **स** | |
| सकलभुवन | 136 |
| सखि सीदति | 88 |
| सखिहे केशि | 51 |
| सखि यारमिता | 133 |
| सजलजलद | 135 |
| सञ्चरदधर | 40 |
| सभय (श्लो) | 101 |
| समुदित | 124 |
| सरसमसृण | 81 |
| सा विरहे | 72 |

| | पुट |
|---|---|
| स्तन विनिहित | 80 |
| स्थलजल | 134 |
| स्फुरदति | 27 |
| स्मरसमर | 119 |
| स्मरातुरां (श्लो) | 84 |
| **ह** | |
| हरहर | 62 |

| | पुट |
|---|---|
| हरिचरण | 116 |
| हरिपरिरंभण | 120 |
| हरिरभिमानी | 98 |
| हरिरिह | 34 |
| हरिरिति | 83 |
| हस्तस्रस्त (श्लो) | 47 |
| हृदि बिस (श्लो) | 58 |


